४१ भारद्वाजः
४२ भारद्वाजःआसुरायणःगौतमः
४३ भारद्वाजः
४४ जातूकर्ण्यः
४५ पाराशर्यः—स्त्रीवंशे ३७वात्सीपुत्रः
४६ सैतव—स्त्रीवंशे प्राचीनयोगीपुत्रः। इमौ सोदरभ्रातरौ
४७ कौंडिन्यः अग्निवेश्यः
४८ कौंडिन्यः
४९ ,,
५० पौतिष्यायणः कौंडिन्यायनः
५१ रैभ्यः
५२ शौनकःआत्रेयः
५३ शांडिल्यःरौहिणायनः
५४ बैजवापायनःवैष्टपुरेयः
५५ बैजवापो गौतमः
५६ औदवाहिःशांडिल्यः
५७ सांकृत्यो भारद्वजः
५८ पाराशर्यः
५९ वात्स्यः
६० गौतमः
६१ शौर्पणाय्यः
६२ वयम् ॥

इति मधुकांडीयः प्रथम पुंवंशः

## २

## अथ याज्ञवल्यकांडस्थो द्वितीयः पुंवंशः

१ स्वयंभुब्रह्म
२ परमेष्ठी
३ सनगः
४ सनातनः
५ सनारुः
६ व्यष्टिः
७ विप्रजित्तिः
८ एकार्षिः
९ प्रध्वंसनः
१० मृत्युः प्राध्वंसनः
११ अथर्वादैवः
१२ दध्यङ्ङाथर्वणः
१३ आश्विनौ
१४ विश्वरूपस्त्वाष्ट्रः
१५ आभूतिस्त्वाष्ट्रः
१६ आयास्यआंगिरसः
१७ पंथाःसौभरः
१८ वत्सनपात्बाभ्रवः
१९ वैदर्भीकौंडिन्यः
२० गालवः
२१ कुमारहारीतः
२२ कैशोर्यःकाप्यः
२३ शांडिल्यः
२४ वात्स्यः
२५ गौतमः
२६ ,,
२७ मांटिः
२८ आत्रेयः

२९ भारद्वाजः

३० आसुरिः

३१ औपजंघनिः

३२ त्रैवणिः = आसुरायणः यास्कः भालुकीपुत्रः

३३ भारद्वाजःआसुरायणःयास्कः

३४ भारद्वाजः

३५ जातूकर्ण्यः—स्त्रीवंशे २५ शांडिलीपुत्रः।१ पुंवंशे ३५ जातूकर्ण्यः।

३६ पाराशर्यः—स्त्रीवंशे २६ मांडूकीपुत्रः।१ पुंवंशे ३६ पाराशर्यः।

३७ पाराशर्यायणः—स्त्रीवंशे२७ मांडूकायनीपुत्रः। १ पुंवंशे ३७ पाराशर्यायणः

३८ घृतकौशिकः—स्त्रीवंशे२८ जायंतीपुत्रः।१ पुंवंशे ३८ घृतकौशिकः

३९ कौशिकायनिः स्त्रीवंशे३० आलंबीपुत्रः।१ पुंवंशे ३९कौशिकायनिः।

४० सायकायनः — प्रथमपुंवंशे ४० बैजवापायनः। स्त्रीवंशे २९ आलंबायनीपुत्रः। श्यापर्णःसायकायनः। इति शतपथश्रुतिः। ६।२। ब्रा.१।३९। सायकस्यापत्यं सायकायनः श्यापर्णो नाम।

४१ औपजंघनिः

४२ त्रैवणिः

४३ सौकरायणः

४४ काषायणः—स्त्रीवंशे ३१ सांकृतीपुत्रः

४५ बलाकाकौशिकः

४६ भारद्वाजः

४७ भारद्वाजःआसुरायणःगौतमः

४८ भारद्वाजः

४९ जातूकर्ण्यः

५० पाराशर्यः—स्त्रीवंशे ३७वात्सीपुत्रः।

५१ सैतवः—स्त्रीवंशे प्राचीनयोगीपुत्रः। इमौ सोदरभ्रातरौ

५२ कौंडिन्यः आग्निवेश्यः

५३ कौंडिन्यः

५४ ,,

५५ और्णवाभः

५६ कौंडिन्यौ

५७ पैतिष्यायणः कौंडिन्यायनः

५८ शौनकःजैवंतायनः रैभ्यः

५९ शांडिल्यःरौहिणायनः

६० बैजवापायनःवैष्टपुरेयः

६१ बैजवापो गौतमः

६२ औदवाहिःशांडिल्यः

६३ सांकृत्यो भारद्वाजः

६४ वात्स्यः पाराशर्यः

६५ वात्स्यः

६६ गौतमः

६७ शौर्पणाय्यः

६८ वयम् ॥

इति याज्ञवल्क्यकांडीयः द्वितीयः पुंवंशः।

# २

## अथ खिलकांडस्थः स्त्रीवंशः

१ आदित्यः
२ अंभिणी
३ वाग्
४ कश्यपोनैध्रुविः
५ शिल्पः कश्यपः
६ हरितः कश्यपः
७ असितोवार्षगणः
८ जिह्वावान्बाध्योगः
९ वाजश्रवाः
१० कुश्रिः—वाजश्रवसःपुत्रः।कां. १० अ. ५ ब्रा. ३ कं. १
११ उपवेशिः
१२ अरुणः—उपवेशेः पुत्रः। कां.१० अ. ६ ब्रा. १ कं. १
१३ उद्दालकः—अरुणस्य पुत्रः।श्रीमंथवंशे—उद्दालकआरुणिः [गोत्रतो गौतमः]। आरुणेः पुत्रः श्वेतकेतुः श्वेतकेतुर्हवा [ आरुणेयः इति बृ.१४ अ. ६ ब्रा. २ कं.१-४ ]
१४ याज्ञवल्क्यः
१५ आसुरिः
१६ आसुरायणः — राथीतरीपुत्रो यास्कः जातूकर्ण्यगुरुः।
१७ प्राश्नीपुत्रआसुरिवासी – आसुरिसंज्ञे देशविशेषे गुरौ वा वसनेना— सुरिवासीति नामांतरं।
१८ कार्शकेयीपुत्रः
१९ सांजीवीपुत्रः – अग्निरहस्यविद्याप्रवर्तकार्षिप्रवाहे१३यो मांडूकायनीशिष्यः सांजीवीपुत्रः स एवायं ।
२० प्राचीनयोगीपुत्रः—१पुंवंशे ४७। २ पुंवंशे ५१ सैतवः । इमौ सोदरभ्रातरौ ।
२१ भालुकीपुत्रः—आसुरायणत्रैवणिः
२२ वैदभृतीपुत्रः
२३ क्रौंचिकीपुत्रौ
२४ राथीतरीपुत्रः—आसुरायणोयास्कः
२५ शांडिलीपुत्रः—१पुंवंशे३५। २ पुंवंशे ३५ जातूकर्ण्यः।
२६ मांडूकीपुत्रः—१ पुंवंशे ३६। २ पुंवंशे ३६ पाराशर्यः।
२७ मांडूकायनीपुत्रः—१ पुंवंशे ३७। २ द्वितीयपुंवंशे पाराशर्यायणः।
२८ जायंतीपुत्रः—१ पुंवंशे ३८। २ पुंवंशे ३८ घृतकौशिकः।
२९ आलंबायनीपुत्रः—१ पुंवंशे ४० बैजवापायनः। २ पुंवंशे ४० सायकायनः।
३० आलंबीपुत्रः—१ पुंवंशे ३९। २ पुंवंशे ३९ कौशिकायनिः।
३१ सांकृतीपुत्रः— द्वितीयपुंवंशे ४४ काषायणः।

३२ शौंगीपुत्रः
३३ आर्तभागी,,
३४ वार्कारुणी,,
३५ पाराशरी,,
३६ भारद्वाजी,,
३७ वात्सीपुत्रः—१ पुंवंशे ४६। २ पुंवंशे पाराशर्यः।
३८ गौतमीपुत्रः
३९ आत्रेयी ,,
४० गौतमी ,,
४१ वार्षगणी,,
४२ शालंकायनी,,
४३ बौधी,,
४४ कौत्सी,,
४५ काश्यपीबालाक्यामाठरीपुत्रः
४६ शौनकीपुत्रः
४७ पैंगी ,,
४८ भारद्वाजी,,
४९ हारिकर्णी,,
५० मैषिकी ,,
५१ वाडेयी ,,
५२ गार्गी ,,
५३ ,, ,,
५४ पाराशरीकौंडिनीपुत्रः
५५ गार्गीपुत्रः
५६ पाराशरी ,,
५७ वात्सीमांडवी,,
५८ भारद्वाजी ,,
५९ वयम्

इति खिलकांडस्थः स्त्रीवंशः

## ४

## अथ दशमकांडस्थो वंशः

उत्तरत्र बृहदारण्ये वंशब्राह्मणे समाम्नास्यमानानां विद्यासंप्रदायप्रवर्तकाना-मृषीणां मध्ये अग्निरहस्यविद्याप्रवर्तकमृषिप्रवाहमनुक्रामति। अथ व्वंशः समानमासां-जीवीपुत्रादिति । इति सायणाचार्यः ।

१ स्वयंभुब्रह्म
२ प्रजापतिः
३ तुरःकावषेयः
४ यज्ञवच्चाराजस्तंबायनः
५ कुश्रिः—वाजश्रवसः—गौतमः । कां. १ अ. ५ ब्रा. ३ कं. १
६ शांडिल्यः } वात्स्यः
७ वात्स्यः } शांडिल्यः

इति काण्वीये बृह. भेदः

८ वामकक्ष्यायणः
९ माहित्थिः
१० कौत्सः
११ मांडव्यः
१२ मांडूकायनिः
१३ सांजीवीपुत्रः
समानमासांजीवीपुत्रात् ।

इति दशमकांडस्थो वंशः ।

५

## अथ श्रीमंथवंशः

१ उद्दालकआरुणिः— आरुणेः पुत्रः श्वेतकेतुः । श्वेतकेतुर्ह वा आरुणेयः [गोत्रतो गौतमः]। तु. १४ अ. ६ ब्रा. २ कं. १–४

२ वाजसनेययाज्ञवल्क्यः

३ मधुकःपैंग्यः

४ चूडोभागवित्तिः

५ जानकिरायस्थूणः

६ सत्यकामोजाबालः [जाबालपुत्रो महाशालः । कां. १० अ. ६ ब्रा. १ कं. १. गोत्रतो औपमन्यवः।कां.१०अ.६ब्रा.१कं ६]

७ अंतेवासिनः

इति श्रीमंथवंशः ।

६

बुडिलः=आश्वतराश्विः । गोत्रतो वैय्याघ्रपद्यः कां. १० अ.६ब्रा. १ कं. ७

---

वाजिशाखासु सर्वासु ह्यासुरायणपूर्वकाः ॥
समाना वंशर्षयोऽमी ह्यासमाप्तेरितीक्ष्यताम् ॥ १५ ॥

अस्य टीका । पूर्ववंशद्वयस्थमवांतरविशेषमाह । वाजिशाखास्विति । पंचदशशाखासु सर्वास्वेव तासु वंशद्वयस्य ऋषयः पाठक्रमेणासुरायणपुरःसराः । वेदाख्यब्रह्मपर्यंताः तुल्याः । आसुरायणात् पूर्वे तु प्रतिशाखमुभयत्र मनुष्यांतास्ते भिद्यंते । तद्भेदश्रुतेरित्यर्थः । वंशर्षीणां तुल्यत्वमध्यापकप्रसिद्धं । इत्याद्यो हिशब्दः । तत्सामान्यस्य पाठानुसारेणानुभवयोग्यत्वमिति द्वितीयो हि शब्दः ।

वेदब्रह्मण आरभ्य सर्वेषामपि शाखिनां ॥
सांजीवीसूनुपर्यंतो वंश एको न भिद्यते ॥ २० ॥

अस्य टीका । सर्वेषां प्रकृतपंचदशसंख्याकवाजिशाखाध्येतॄणामिति यावत् ॥

सांजीवीपुत्रतःस्त्ववर्वाक् प्रतिशाखं पृथक् पृथक् ॥
आचार्यभेदाद् भिद्यंते वंशा वाजसनेयिनाम् ॥ २१ ॥

अस्य टीका । वाजसनेयिनां प्रतिशाखं सांजीवीपुत्रादुपक्रम्य मनुष्यपर्यंतमंतिमा वंशाः पृथक् भिद्यंते । आचार्यभेदोपालंभादिति योजना ॥

## परिशिष्ट ४

# कण्वगुरुशिष्यपरंपरावंश

## १

### अथ मधुकांडस्थः प्रथमः पुंवंशः

१ स्वयंभुब्रह्म
२ परमेष्ठी
३ सनगः
४ सनातनः
५ सनारुः
६ व्यष्टिः
७ विप्राजितिः
८ एकार्षिः
९ प्रध्वंसनः
१० मृत्युः प्राध्वंसनः
११ अथर्वादैवः
१२ दध्यङ्ङाथर्वणः
१३ अश्विनौ
१४ विश्वरूपस्त्वाष्ट्रः
१५ आभूतिस्त्वाष्ट्रः
१६ आयास्यआंगिरसः
१७ पंथाः सौभरः
१८ वत्सनपात्बाभ्रवः
१९ विदर्भीकौंडिन्यः
२० गालवः
२१ कुमारहारितः
२२ कैशोर्यःकाप्यः
२३ शांडिल्यः
२४ वात्स्यः
२५ गौतमः
२६ गौतमः
२७ मांटिः
२८ आत्रेयः
२९ भारद्वाजः
३० आसुरिः
३१ औपजंघनिः
३२ त्रैवणिः
३३ आसुरायणःयास्कः
३४ जातूकर्ण्यः
३५ पाराशर्यः
३६ पाराशर्यायणः
३७ घृतकौशिकः
३८ कौशिकायनिः
३९ बैजवापायनः
४० पाराशर्यः
४१ भारद्वाजः
४२ भारद्वाजःगौतमः
४३ भारद्वाजः
४४ पाराशर्यः

४५ सैतवप्राचीनयोग्यौ
(सोदरौ भ्रातरौ)
४६ गौतमः
४७ आनभिम्लातः
४८ ,,
४९ आनभिम्लातः –शांडिल्यः– इति गुरुद्वयं ।
५० आग्निवेश्यः
५१ गौतमः–कौशिकः–इति गुरुद्वयं ।
५२ शांडिल्यः
५३ कौंडिन्यः
५४ कौशिकः
५५ गौपवनः
५६ पौतिमाष्यः
५७ गौपवनः
५८ पौतिमाष्यः

इति मधुकांडीयः प्रथमः पुंवंशः

## २

## अथ याज्ञवल्यकांडस्थो द्वितीयः पुंवंशः

१ स्वयंभुब्रह्म
२ परमेष्ठी
३ सनगः
४ सनातनः
५ सनारुः
६ व्यष्टिः
७ विप्रजित्तिः
८ एकार्षिः
९ प्रध्वंसनः
१० मृत्युः प्राध्वंसनः
११ अथर्वादैवः
१२ दध्यङ्ङाथर्वणः
१३ आश्विनौ
१४ विश्वरूपस्त्वाष्ट्रः
१५ आभूतिस्त्वाष्ट्रः
१६ आयास्यआंगिरसः
१७ पंथाःसौभरः
१८ वत्सनपात्बाभ्रवः
१९ विदर्भीकौंडिन्यः
२० गालवः
२१ कुमारहारितः
२२ कैशोर्यःकाप्यः
२३ शांडिल्यः
२४ वात्स्यः
२५ गौतमः
२६ ,,
२७ मांटिः
२८ आत्रेयः

२९ भारद्वाजः
३० आसुरिः
३१ औपजंघनिः
३२ त्रैवणिः
३३ आसुरायणःयास्कः
३४ जातूकर्ण्यः
३५ पाराशर्यः
३६ पाराशर्यायणः
३७ घृतकौशिकः
३८ कौशिकायनिः
३९ वैजवापायनः
४० सायकायनः = श्यापर्णःसायकायनः। कण्वशतपथश्रुतिः। उखासंभरणकांडे । सायकस्यापत्यं सायकायनः श्यापर्णो नाम।
४० काषायणः
४१ सौकरायणः
४२ माध्यंदिनायनः
४३ जाबालायनः
४६ उद्दालकायनः
४५ गार्ग्यायणः
४६ पाराशर्यायणः
४७ सैतवः
४८ गौतमः
४९ गार्ग्यः
५० ,,
५१ आग्निवेश्यः
५२ गौतमः—कौशिकः—इति गुरुद्वयं।
५३ शांडिल्यः
५४ कौंडिन्यः
५५ कौशिकः
५६ गौपवनः
५७ पौतिमाष्यः
५८ गौपवनः
५९ पौतिमाष्यः

इति याज्ञवल्क्यकांडीयः द्वितीयः पुंवंशः।

## ३

## अथ खिलकांडस्थः स्त्रीवंशः

१ आदित्यः
२ अंभिणी
३ वाग्
४ कश्यपोनैध्रुविः
५ शिल्पः कश्यपः
६ हरितः कश्यपः
७ असितोवार्षगणः
८ जिव्हावान्बाध्योगः
९ वाजश्रवाः
१० कुश्रिः
११ उपवेशिः
१२ अरुणः
१३ उद्दालकः
१४ याज्ञवल्क्यः
१५ आसुरिः
१६ आसुरायणः

१७ प्राश्नीपुत्रआसुरिवासी
१८ सांजीवीपुत्रः
१९ प्राचीनयोगीपुत्रः
२० कार्शकेयीपुत्रः
२१ वैदभृतीपुत्रः
२२ क्रौंचिकीपुत्रौ
२३ भालुकीपुत्रः
२४ राथीतरीपुत्रः
२५ शांडिलीपुत्रः
२६ मांडूकीपुत्रः
२७ मांडूकायनीपुत्रः
२८ जायंतीपुत्रः
२९ आलंबीपुत्रः
३० आलंबायनीपुत्रः
३१ सांकृतीपुत्रः
३२ शौंगी पुत्रः
३३ आर्तभागी,,
३४ वार्कारुणी,,
३५ वार्कारुणीपुत्रः
३६ पाराशरी,,
३७ वात्सीपुत्रः
३८ पाराशरीपुत्रः
३९ भारद्वाजी,,
४० गौतमीपुत्रः
४१ आत्रेयी ,,
४२ कापीपुत्रः १ = काण्वीपुत्रः २ गुरुद्वयं
४३ वैय्याघ्रपदीपुत्रः१=आलंबीपुत्रः२ गुरुद्वयं
४४ कौशिकीपुत्रः
४५ कात्यायनीपुत्रः
४६ पाराशरीपुत्रः
४७ औपस्वस्तीपुत्रः
४८ पाराशरी ,,
४९ भारद्वाजी,,
५० गौतमी ,,
५१ कात्यायनी ,,
५२ पौतीमाषी ,,

इति खिलकांडस्थः स्त्रीवंशः ।

## ४

## अथ खिलकांडस्थो वंशः

( अयं माध्यंदिनीयेऽग्निरहस्य उक्तः )

१ स्वयंभुब्रह्म
२ प्रजापतिः
३ तुरःकावषेयः
४ यज्ञवचाराजस्तंबायनः
५ कुश्रिः
६ वात्स्यः } शांडिल्यः
७ शांडिल्यः } वात्स्यः
८ वामकक्ष्यायणः
९ माहित्थिः
१० कौत्सः
११ मांडव्यः
१२ मांडूकायनिः
१३ सांजीवीपुत्रः

समानमासांजीविपुत्रात् ।

इति माध्यंदिनीये बृह. भेदः इति खिलकांडस्थः वंशः।

५

## अथ श्रीमंथवंशः

१ उद्दालकआरुणिः
२ वाजसनेयोयाज्ञवल्क्यः
३ मधुकःपैंग्यः
४ चूलोभागवित्तिः
५ जानकीरायस्थूणः
६ सत्यकामोजाबालः

इति श्रीमंथवंशः ।



काण्वबृहदारण्यकवंशत्रयस्य व्याख्या आत्मपुराणे चतुर्थेऽध्याये उपक्रमत एव द्रष्टव्या ।

परिशिष्ट ५

# योगीश्वरयाज्ञवल्क्यपूजाविधिः

आचमनं। प्राणायामः। शांतिसूक्तपाठः। इष्टदेवादिप्रणामः। देशकाल-संकीर्तनं । संकल्पः । ममोपात्तसकलकल्मषक्षयद्वारा श्रौतस्मार्तकर्मोपास्तिज्ञान-संसिद्ध्या परब्रह्मभावावाप्तये श्रीकात्यायनीमैत्रेयीसमेतश्रीमद्योगीश्वरयाज्ञवल्क्य-प्रीतये यथासपांदितद्रव्यैः पूजनमहं करिष्ये । इति ।

ध्यानं ॐ वंदेऽहं मंगलात्मानं भास्वन्तं वेदविग्रहम् ॥
याज्ञवल्क्यं मुनिश्रेष्ठं जिष्णुं हरिहरप्रभुम् ॥ १ ॥
जितेंद्रियं जितक्रोधं सदा ध्यानपरायणम् ॥
आनन्दनिलयं वन्दे योगानन्दमुनीश्वरम् ॥ २ ॥

श्रीमत्कात्यायनीमैत्रेयीसमेतश्री योगीश्वरयाज्ञवल्क्यमहर्षिभ्यो नमः ध्यानं समर्पयामि ।

आवाहनं ब्रह्मावतार सर्वज्ञ ज्ञानकाण्डप्रवर्तक ॥
सान्निध्यं कुरु योगीन्द्र भक्तवात्सल्यवारिधे ॥३॥

आसनं केदारेशप्रसादात्त यज्ञवल्कतपःफल ॥
भक्त्या दास्यामि ते दिव्यं रत्नसिंहासनं शुभम्॥४॥

पाद्यं वैकुंठनाथसंदिष्टतत्त्वज्ञानसुधानिधे ॥
पाद्यं तुभ्यं प्रदास्यामि गंधपुष्पाक्षतैर्युतं ॥ ५ ॥

अर्घ्यम् सुनन्दागर्भसंजात वर्धमानपुरोद्भव ॥
अर्घ्यं प्रकल्पये तुभ्यं दूर्वाबिल्वाब्जवारिभिः ॥६॥

आचमनं व्यासशिष्य महाभाग सर्वशास्त्रार्थकोविद ॥
आचम्यतां ऋषिश्रेष्ठ पंचगंगामृतं शिव ॥ ७ ॥

स्नानं ऋगध्ययनसंपूर्ण बाष्कलच्छात्रशेखर ॥
महर्षे गांगतोयेन स्नापयामि सुगन्धिना ॥ ८ ॥

पंचामृतं पंचामृतं शर्कराढ्यं पयो दधि घृतं मधु ॥
शाकलाधीतऋग्वेदत्यागिन्स्नानार्थमर्पितम् ॥ ९॥

पुनःस्नानं सूर्यप्रसादसंलब्धदिव्यवेदचतुष्टय ॥
योगिराट् स्नापयामि त्वां पावनैर्गौतमीजलैः॥१०॥

वस्त्रं वैशंपायनसच्छिष्य यजुर्वेदपरायण ॥
पीताम्बरं प्रदास्यामि परिधत्स्व महामुने ॥११॥

यज्ञोपवीतं प्रतिज्ञापालनरत गुरुकोपप्रदीपक ॥
यजुर्वेदपरित्यागिन्यज्ञसूत्रं ददामि ते ॥ १२ ॥

गन्धं सूर्योपदिष्टश्रीशुक्लयजुर्वेदप्रवर्तक ॥
चन्दनं शीतलं दिव्यं धारयाशु दयानिधे ॥१३॥

अक्षतान् निर्जिताखिलदुर्वाद मुनिवृन्दसुसेवित ॥
अक्षतान्धवलांस्तुभ्यमर्पयामि शुभाप्तये ॥ १४ ॥

सौभाग्यद्रव्यम् भोः कात्यायनि मैत्रेयि तापसीवृन्दसंस्तुते ॥
सौभाग्यं गृह्यतां देव्याविदं श्रेयःप्रवर्धकम् ॥१५॥

पुष्पं विदेहराजार्पितगोसहस्रपणजिद्गुरो ॥
पूजयामि सुमैर्दिव्यैस्तुलसीबिल्वपत्रकैः ॥ १६ ॥

अत्रावसरे — अष्टोत्तरशतनामभिः सहस्रनामभिः तुलसीबिल्वपत्र-दूर्वापुष्पाक्षताद्यर्पणं कार्यम् ।

धूपं संलब्धब्रह्मनिष्ठाख्य विदेहज्ञानबोधक ॥
आघ्रापयामि सर्वज्ञ धूपं कृष्णागरूद्भवम् ॥१७॥

दीपं कात्यायनीप्राणनाथ मैत्रेयीप्राणवल्लभ ॥
पंचवर्तियुतं दीपं दर्शयामि मनोहरम् ॥ १८ ॥

नैवेद्यं ऋषिमंडलसंदत्तयोगींद्रपदशोभित ॥
निवेदयामि शाल्यन्नं पंचभक्ष्यसमन्वितम् ॥१९॥

ताम्बूलं कात्यायनीवित्तदातमैत्रेयीज्ञानबोधक ॥
एलालवंगसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥ २० ॥

फलं ऐहिकामुष्मिकश्रेयःप्रदशास्त्रोपदेशक ॥
अर्पयामि फलं तुभ्यं सुस्वादुरससंप्लुतम् ॥२१॥

दक्षिणां यज्ञार्द्धिकारणात्प्राज्ञैर्यज्ञपत्नीति संस्तुताम् ॥
ददामि दक्षिणां तुभ्यं नैकक्रतुषु दीक्षित ॥२२॥

अत्रावसरे आरात्रिक्यगानेन कर्पूरादिप्रज्वालनं पुरतो विधेयम् ।

## १ आरात्रिक्यम्

जय देव जय देव जय याज्ञवल्क्यं सकलमुनिश्रेष्ठं वेदविग्रहम् ॥
जिष्णुं हरिहरप्रभुं भास्वन्तं सूर्यध्यानपरं मंगलात्मानम् ॥ १ ॥ जय देव० ॥
लोकाचार्यं सत्यं मैत्रेयीच्छितदं ब्रह्मनिष्ठं कात्यायनीप्रियदम् ॥
जितेंद्रियं शास्त्रतत्त्वज्ञातारं वेदत्रयीश्रुतं ब्राह्मणोत्तमम् ॥ २ ॥ जय देव० ॥
सूर्यशिष्यं तत्त्वज्ञानदातारं, रव्युपदेशाच्छुक्लयजुर्वर्धकम् ॥
विद्याधीशं विष्णुरूपं समचित्तं कलाधरं योगीश्वरं श्रीमंतम् ॥ ३ ॥ जय देव० ॥
गार्गीस्तुतं तपस्विनं योगीन्द्रं मुमुक्षुजनसंसेव्यं यज्ञवर्धकम् ॥
जनकादिगुरुं सत्यवादिनं ब्रह्मरातसुतं यज्ञवत्सलम् ॥ ४ ॥ जय देव० ॥
संन्यासिनामाद्यं ब्रह्ममनोज्ञं सुनंदागर्भजनितं भवसागरतारम् ॥
दुष्टराज्ञां खलु शापदातारं सामश्रवादिशिष्यपूजितपदकमलम् ॥५॥ जय देव० ॥
सनकादिकमहायोगीवंदितं लोकपावनं ब्रह्मिष्ठप्रवरम् ॥
पाराशरोपनामकत्र्यंबकतनुजोऽहं वंदे शुद्धात्मानं सूर्यावतारम् ॥६॥ जय देव० ॥

## २ आरात्रिक्यम्

जय जय याज्ञवल्क्य ब्रह्मन्नुतकीर्ते । जय मंगलमस्तु तव श्रीगुरुमूर्ते ॥ धृ. ॥
ऋष्यर्थितकृतभूलोकावताराविधे । पंचशरद्गर्भोदयाय विष्ण्वादेशावधे ॥ १ ॥
कार्तिकशुद्धसप्तम्यां निजजन्मातिथे । यज्ञवल्कसुनंदानंदनानंदपयोधे ॥ २ ॥
पंचसमाभ्यस्ताक्षरविद्याशास्त्रनिधे । अष्टमशरदुपनीतकृताध्ययनाविधे ॥ ३ ॥
धिःकृतमदवर्धमानपुरनरपते । मंत्रतीर्थसंसिक्तस्तंभांकुरान्विते ॥ ४ ॥
गुरुविवादकृतात्मयजुर्वेदवमे । गायत्रीकृपालब्धात्मपुनःश्रुतिभूमे ॥ ५ ॥
वडवाश्वरथारूढकृतादेशरवे । जितगंधर्वविवादब्रह्मज्ञानकवे ॥ ६ ॥
जनकयज्ञनिमित्तब्रह्मसभामध्यधृते । गोसहस्रग्रहणारूढात्मगदापाणे ॥ ७ ॥
लाह्यायन्याश्वलवाक्खंडनपटुयुक्ते । उषस्तार्तभागप्रश्नोत्तरसमयोक्ते ॥ ८ ॥
कहोलोद्दालकप्रश्नोत्तरसूत्रात्मकसूक्ते । वाचक्नवीवाक्शरखंडनाक्षरास्त्रशक्ते ॥ ९ ॥
शकलपुत्रमृतसंजीवनप्रकृते । वादिवृंदकृतनानाविधवादनिष्कृते ॥ १० ॥
विदेहराजहृदयाब्जार्कानंदस्फूर्ते । जितसद्ब्रह्मविद्वज्जनस्तोममहामूर्ते ॥११॥
सुरवरमुनिकृतजयजयध्वने । जनकदेशिकजननुतसुज्ञानमुने ॥ १२ ॥

माघपूर्णिमामुनिकृतयोगींद्राकृयच्छवे । पद्माभिषिक्तब्रह्मैक्याख्दज्ञानपवे ॥ १३ ॥
मैत्रेयीकात्यायनीप्रियसत्प्राणपते । चंद्रकांतजयमेघनामत्रयसंतते ॥ १४ ॥
सकलका॰दुषात्मगृहस्थाश्रमतृप्ते । मैत्रेयीज्ञानदेशिकचरमाश्रमगुप्ते ॥ १५ ॥
जय जय याज्ञवल्क्य ब्रह्मन्नुतकीर्ते । जय मंगलमस्तु तव श्रीगुरुमूर्ते ॥ धृ. ॥
इति श्रीनेल्लूरपुरवासिनीवेन्नेलकंटिहनूमांबाविरचितश्रीयाज्ञवक्यस्याराशिक्यं संपूर्णम्।

मन्त्रपुष्पं — संन्यासाश्रमसन्निष्ठ यथेष्टविहृते मुने ॥
पुष्पांजलिं प्रदास्यामि वेदमन्त्राभिमन्त्रितम् ॥२३॥

प्रदक्षिणा — जन्मजन्मार्जितं पापं यत्तन्नश्यतु मे द्रुतम् ॥
याज्ञवल्क्य महाप्राज्ञ ते प्रदक्षिणयाऽनया ॥२४॥

नमस्कारः — वाराणसीमहाक्षेत्रपंचगंगामठस्थित ॥
नमस्करोमि योगींद्र भुक्तिमुक्तिप्रसिद्धये ॥२५॥

प्रार्थना — मुमुक्षुजनसंसेव्य सर्वप्राणिशुभंकर ॥
सद्बुद्धिं देहि सर्वत्र प्रार्थयामि पुनःपुनः ॥२६॥

अनया यथासंपादितद्रव्यैः प्रपूजया श्रीमत्कात्यायनीमैत्रेयीसमेतः श्रीभगवान्योगीश्वरो याज्ञवल्क्यमुनिः प्रीयताम् । इति पूजानिवेदनम् । यस्य स्मृत्येत्यादिकर्मेश्वरार्पणं कुर्यात् ।

॥ इति पूजाविधिः ॥



## परिशिष्ट ६

# श्रीयोगीश्वरयाज्ञवल्क्यस्तोत्रम्

अतींद्रियमुनीश्वरप्रमुखमीडितं तापसैः ।
अनेकनिगमागमाखिलरहस्यसंवेदिनं ॥
विदेहजनकप्रभुप्रणतमूर्धवंद्यांघ्रिकं ।
स्तुमो धवलयाजुषाद्यगुरुयाज्ञवल्क्यं मुनिं ॥१॥

कालत्रयज्ञानिमुनींद्रपूज्यं । जितेंद्रियं शास्त्रसमुद्रमंथं ।
योगीश्वरं ब्रह्मविदां वरिष्ठं । नमो यजुर्विद्गुरुयाज्ञवल्क्यं ॥२॥

ब्रह्मिष्ठमान्यं मुनिवृंदवर्यं । योगीशवंद्यं जनकादिपूज्यं ।
लोकत्रयीगीतयशःसुकार्यं । भक्त्या नमामो गुरुयाज्ञवल्क्यं ॥३॥

तपस्विमुनिसत्तमार्चितपदारविंदद्वयं ।
जितेंद्रियमुनींद्रहृत्कमलवासियोगीश्वरं ॥
सुयोगिजनकादिभिर्निरतभक्तितः सेवितं ।
नुमः परमधार्मिकस्मृतिकयाज्ञवल्क्यं गुरुं ॥ ४ ॥

ब्रह्मिष्ठर्षिजनेषु मुख्यपदधृक् प्रख्यातयोगीश्वरः ।
श्रौतस्मार्तपथोपदेशमहिमा वेदांतविद्यागुरुः ॥
श्रीमच्छुक्लयजुर्दलं शतपथं चेत्यादिनिर्माणकृत् ।
तस्मै श्रीगुरुयाज्ञवल्क्यमुनये भक्त्या नमस्कुर्महे ॥ ५॥

पुण्यश्लोकमहर्षिसन्मुनिगणैः पूज्यांघ्रिपद्मद्वयं ।
सत्यामोघवचोऽवदातयशसा भास्वन्महीमंडलं ॥
सर्वाम्नायरहस्यपाटवमतिं योगीश्वरं तापसं ।
प्राहोभस्त्वचिरेण शुक्लयजुषां श्रीयाज्ञवल्क्यं गुरुं ॥६॥

नमामः सद्भक्त्या परममहनीयश्रुतिशिरः ।
महादुर्बोधार्थोपनिषदुदधेः पारगतिकं ॥
सुपूज्यं सद्विद्यागमनिगमतत्त्वादिनिपुणं ।
महर्षिं ब्रह्मर्षिं परमपुरुषं देवचरितं ॥ ७ ॥

ब्रह्मण्याखिलनैकरूपनिगमप्राविण्यपारंगतं ।
ब्रह्मानंदसमुद्रवीचितरणोत्तीर्णश्च पारं परं ॥
ब्राह्मिष्ठं मुनियाज्ञवल्क्यसुगुरुं माध्यंदिनब्राह्मणाम् ।
योगींद्रं सुतपोऽवदातयशसं श्रीयाज्ञवल्क्यं नुमः ॥८॥

आचारव्यवहारदंडनियमस्मृत्यात्मधर्मोद्धृतिं ।
योगध्यानविशारदर्षिगणहृत्पद्मप्रबुद्धास्करं ॥
सत्यामोघसरस्वतीगुरुयशःसंव्याप्तभूमंडलं ।
शंसामो मुनिवर्यवंदितपदं श्रीयाज्ञवल्क्यं गुरुं ॥ ९ ॥

श्रुतिस्मृतिपुराणसंमतसुधर्मशास्त्रानुगं ।
सदाचरणमस्य तन्मुनिवरैः सुपूज्यादरं ॥
समुज्ज्वलसुवर्चसं गुरुमहार्षियोगीश्वरं ।
अलौकिकचमत्कृतिक्षममसुं नमामो मुदा ॥ १० ॥

तीव्राराधितभास्करात्तसुकृपाज्योत्स्नाढ्यभूमंडलः ।
संसारार्तिकृशानुतापशमने वेदांतविद्यागुरुः ॥
दंभध्वांतदिवाकरोऽघचयहृत्पाखंडशैलाशनिः ।
सद्बोधामृतनिर्झरो विजयतां श्रीयाज्ञवल्क्यो मुनिः ॥ ११ ॥

नृत्यद्धेमसुगोहृदुत्पलरविं स्वानंदमग्नं गुरुं ।
आधिव्याधिभवादिबाधितमनाः संत्रस्तजीवोप्यहं ॥
पूज्यं शौनकमुख्यसन्मुनिवरैर्योगीश्वरं चेतसा ।
श्लाघे नासिकनाम्नि पुण्यनिलये क्षेत्रे पवित्रे वसन् ॥ १२ ॥



## परिशिष्ट ७

# द्वादशनामावलिः

अथ श्रीमद्योगीश्वरयाज्ञवल्क्यमुनेर्द्वादश नामावलिः।

वन्देऽहं मंगलात्मानं भास्वन्तं वेदविग्रहं ।
याज्ञवल्क्यं मुनिश्रेष्ठं जिष्णुं हरिहरप्रभुम् ॥ १ ॥
जितेंद्रियं जितक्रोधं सदा ध्यानपरायणम् ।
आनंदनिलयं वन्दे योगानंदमुनीश्वरम् ॥ २ ॥

१ ॐ मंगलात्मने नमः
२ ,, भास्वते नमः
३ ,, वेदविग्रहाय नमः
४ ,, मुनिश्रेष्ठाय नमः
५ ,, जिष्णवे नमः
६ ,, हरिहरप्रभाय नमः
७ ,, जितेन्द्रियाय नमः
८ ,, जितक्रोधाय नमः
९ ,, सदाध्यानपराय नमः
१० ,, आनंदानिलयाय नमः
११ ,, योगानंदाय नमः
१२ ,, मुनीश्वराय नमः
,,एवंविशिष्टश्रीयाज्ञवल्क्याय नमः

एवं द्वादशनामानि त्रिसंध्यं यः पठेन्नरः ।
योगीश्वरप्रसादेन विद्यावान्धनवान्भवेत् ॥ ३ ॥

इत्यादित्यपुराणोक्तश्रीयाज्ञवल्क्यद्वादशनामस्तोत्रं संपूर्णम्



## परिशिष्ट ८

# अष्टोत्तरशतनामावलिः

अथ श्रीमद्योगीश्वरयाज्ञवल्क्यमुनेरष्टोत्तरशतनामावलिः

यस्य स्मरणमात्रेण सुलभस्तत्त्वनिश्चयः ।
ब्रह्मिष्ठप्रवरस्यास्य याज्ञवल्क्यस्य धीमतः ॥ १॥
नाम्नामष्टोत्तरशतं तत्त्वज्ञानप्रदायकम् ।
सर्वपापप्रशमनमायुरारोग्यवर्धनम् ॥ २ ॥

अस्य श्रीमद्योगीश्वरयाज्ञवल्क्यमुनेरष्टोत्तरशतनामस्तोत्रमन्त्रस्य कात्यायन-ऋषिः अनुष्टुप्छंदः श्रीयाज्ञवल्क्यो महामुनिर्देवता भुक्तिमुक्तिप्रसिद्ध्यर्थे जपे पुष्पादिसमर्पणे वा विनियोगः।

१ ॐ याज्ञवल्क्याय नमः
२ ,, ब्रह्मिष्ठाय नमः
३ ,, जनकस्य गुरवे नमः
४ ,, लोकाचार्याय नमः
५ ,, ब्रह्ममनोजाय नमः
६ ,, योगिनां पतये नमः
७ ,, शाकल्यप्राणदात्रे नमः
८ ,, मैत्रेयीज्ञानदाय नमः
९ ,, महते नमः
१० ,, कात्यायनीप्रियाय नमः
११ ,, शांताय नमः
१२ ,, शरणत्राणतत्पराय नमः
१३ ,, धर्मशास्त्रप्रणेत्रे नमः
१४ ,, ब्रह्मविदे नमः
१५ ,, ब्राह्मणोत्तमाय नमः
१६ ,, योगीश्वराय नमः
१७ ,, योगमूर्तये नमः
१८ ,, योगशास्त्रप्रवर्तकाय नमः
१९ ,, भूतानागतागतज्ञाय नमः
२० ,, विद्याऽविद्याविभागविदे नमः
२१ ,, भगवते नमः
२२ ,, शास्त्रतत्त्वज्ञाय नमः
२३ ,, तपस्विने नमः
२४ ,, शरणाय नमः
२५ ,, विभवे नमः
२६ ,, तत्त्वज्ञानप्रदात्रे नमः
२७ ,, सर्वज्ञाय नमः
२८ ,, करुणात्मवते नमः
२९ ,, संन्यासिनामादिमाय नमः
३० ,, सूर्यशिष्याय नमः
३१ ,, जितेन्द्रियाय नमः
३२ ,, अयातयामसंज्ञाप्रवर्तनपराय नमः
३३ ,, गुरवे नमः

३४ ,, वाजिविप्रोत्तमाय नमः
३५ ,, सत्याय नमः
३६ ,, सत्यवादिने नमः
३७ ,, दृढव्रताय नमः
३८ ,, धातृप्रसादसंलब्धगायत्रीमहिमाऽऽकृतये नमः
३९ ,, गार्गीस्तुताय नमः
४० ,, धर्मपुत्रयागाध्वर्यवे नमः
४१ ,, विचक्षणाय नमः
४२ ,, दुष्टराज्ञां शापदात्रे नमः
४३ ,, शिष्टानुग्रहकारकाय नमः
४४ ,, अनंतगुणरत्नाढ्याय नमः
४५ ,, भवसागरतारकाय नमः
४६ ,, स्मृतिमात्रात्पापहन्त्रे नमः
४७ ,, ज्योतिषे नमः
४८ ,, ज्योतिर्विदां वराय नमः
४९ ,, विश्वाचार्याय नमः
५० ,, विष्णुरूपाय नमः
५१ ,, विश्वप्रियहितरताय नमः
५२ ,, श्रुतिप्रसिद्धाय नमः
५३ ,, सिद्धात्मने नमः
५४ ,, समचित्ताय नमः
५५ ,, कलाधराय नमः
५६ ,, आदित्यरूपाय नमः
५७ ,, आदित्यसहिष्णवे नमः
५८ ,, मुनिसत्तमाय नमः
५९ ,, सामश्रवादिशिष्यैश्चपूजितांघ्रये नमः
६० ,, दयानिधये नमः
६१ ,, ब्रह्मरातसुताय नमः
६२ ,, श्रीमते नमः
६३ ,, पंक्तिपावनपावनाय नमः
६४ ,, संशयस्यापि सर्वस्य निवर्तनपटुव्रताय नमः
६५ ,, सनकादिमहायोगिपूजिताय नमः
६६ ,, पुण्यकृत्तमाय नमः
६७ ,, सूर्यावताराय नमः
६८ ,, शुद्धात्मने नमः
६९ ,, आदिनारायणांशभृते नमः
७० ,, आदिवैदेहशालांगऋषिजेत्रे नमः
७१ ,, त्रयीमयाय नमः
७२ ,, होत्रश्वलमुनिप्राप्तप्रभावाय नमः
७३ ,, कार्यसाधकाय नमः
७४ ,, शरणागतवैदेहाय नमः
७५ ,, कृपालवे नमः
७६ ,, लोकपावनाय नमः
७७ ,, ब्राह्मिष्ठप्रवराय नमः
७८ ,, दान्ताय नमः
७९ ,, वेदवेद्याय नमः
८० ,, महामुनये नमः
८१ ,, वाजिने नमः
८२ ,, वाजसनेयाय नमः
८३ ,, वाजिविप्रकृताधिकृते नमः
८४ ,, कल्याणदाय नमः
८५ ,, यज्ञराशये नमः
८६ ,, यज्ञात्मने नमः

८७ ,, यज्ञवत्सलाय नमः
८८ ,, यज्ञप्रधानाय नमः
८९ ,, यज्ञेशप्रीतिसंजननाय नमः
९० ,, ध्रुवाय नमः
९१ ,, कृष्णद्वैपायनाचार्याय नमः
९२ ,, ब्रह्मदत्तप्रसादकाय नमः
९३ ,, शांडिल्यविद्याप्रभृतिविद्यावादेषु निष्ठिताय नमः
९४ ,, अज्ञानांधतमःसूर्याय नमः
९५ ,, भगवद्ध्यानपूजिताय नमः
९६ ,, गवांनेत्रे नमः
९७ ,, जयशीलाय नमः
९८ ,, प्रभाकराय नमः
९९ ,, वैशंपायनशिष्याणां तैत्तिरीयत्वप्रदायकाय नमः
१०० ,, कण्वादिभ्योऽयातयामशाखाध्यापयितृत्वभाजिने नमः
१०१ ,, पांक्तिपावनविप्रेभ्यो नमः
१०२ ,, परमात्मैकबुद्धिमते नमः
१०३ ,, तेजोराशये नमः
१०४ ,, पिशंगाक्षाय नमः
१०५ ,, परिव्राजकराजे नमः
१०६ ,, मुनये नमः
१०७ ,, नित्यानित्यविभागज्ञाय नमः
१०८ ,, सत्यासत्यविभागविदे नमः

श्रीकात्यायनीमैत्रेयीसमेतश्रीयाज्ञवल्क्यमुनये नमः

इति श्रीमद्योगीश्वरयाज्ञवल्क्यमुनेरष्टोत्तरशतनामस्तोत्रं संपूर्ण.

एतदष्टोत्तरशतं नाम्नां गुह्यतमं विदुः ॥ याज्ञवल्क्यप्रसादेन शास्त्रोक्तं भवते मया ॥ १ ॥ जपध्वं मुनिशार्दूलास्तत्त्वज्ञानं दृढं भवेत् ॥ प्रातःकाले समुत्थाय स्नात्वा नियतमानसः ॥ २ ॥ इदं जपंति योगीशनाम्नामष्टोत्तरं शतं ॥ स एव मुनिशार्दूला दृढतत्त्वधियां वरः ॥ ३ ॥ विद्यार्थी चाप्नुयाद्विद्यां धनार्थी चाप्नुय द्धनं ॥ आयुरर्थी च दीर्घायुर्नापमृत्युमवाप्नुयात् ॥ राज्यार्थी लभते राज्यं कन्यार्थी कन्यकां लभेत् ॥ रोगार्तो मुच्यते रोगात्त्रिंशद्वारं जपेन्नरः ॥ ५ ॥ शतवारं भानुवारे जपित्वाऽभीष्टमाप्नुयात् ॥ इत्युक्तं समुपाश्रित्य गौतमेन महर्षिणा ॥ ६ ॥ तथैव जजपुस्तत्र ते सर्वेऽपि यथाक्रमं ॥ ब्राह्मणान्भोजयामासुः पुरश्चरणकर्मणा ॥ ७ ॥ अष्टोत्तरशतस्यास्य याज्ञवल्क्यस्य धीमतः ॥ अत्यंतगूढमाहात्म्यं भस्माच्छन्नानलोपमम् ॥ ८ ॥

इति श्रीमदादित्यपुराणे उत्तरखंडे याज्ञवल्क्याष्टोत्तरशतनामस्तोत्रवंशकस्तृतीयोऽध्यायः

## परिशिष्ट ९

# सहस्रनामावलिः

अथ श्रीयोगीश्वरयाज्ञवल्क्यसहस्रनामावलिः ।

अस्य श्रीयोगीश्वरयाज्ञवल्क्यसहस्रनामस्तोत्रस्य तदाराधनतत्परः कश्चन कविः यजुरात्मकं छंदः श्रीयाज्ञवल्क्यमुनिर्देवता श्रौतकर्मोपासनाज्ञानसिध्यर्थं फलपुष्पादूर्वाबिल्वतुलसीपत्राक्षतादिसमर्पणे पाठादौ च विनियोगः ।

अथ ध्यानम्

कालत्रयज्ञानमुनींद्रपूज्यं जितेंद्रियं शास्त्रसमुद्रमंथम् ॥
योगीश्वरं ब्रह्मविदां वरिष्ठं नुमो यजुर्विद्गुरुयाज्ञवल्क्यम् ॥ १ ॥

सानंदाय नमः
सुनंदापुत्राय नमः
स्वयंभूशिष्याय नमः
अश्वत्थमूलवासिने नमः
अयातयामाम्नायतत्पराय नमः
अष्टाशीतिसहस्रमुनिपरिवेष्टिताय नमः
अमूर्तमूर्तये नमः
अधिकसुंदरतनवे नमः
अमूर्ताय नमः
अघसंहारिणे नमः
अनघाय नमः
अभिनवसुंदराय नमः
अमिततेजसे नमः
अष्टाक्षरमहामंत्रसिद्धाय नमः
अयातयामोपनिषद्वादसन्नद्धाय नमः
अजातशत्रोरध्वर्यवे नमः
अणिमादिगुणयुक्ताय नमः
अष्टबाहुसमान्विताय नमः
अहमेवसानंद इति वादिने नमः
अष्टैश्वर्यसंपन्नाय नमः
अष्टांगयोगान्विताय नमः
अत्याग्निष्टोमदीक्षिताय नमः
अर्कतुल्याय नमः
अलघुविक्रमाय नमः
अयातयामसारंगाय नमः।
अत्रेस्तारकप्रदात्रे नमः
अष्टादशपारिशिष्टप्रकाशाय नमः
अष्टाविंशतिवेदव्यासविदे नमः
अक्रोधिताय नमः
अनल्पतेजसे नमः
अहमेवकरिष्यामीति वादिने नमः
अधिकगुरुभक्तियुक्ताय नमः
अलंबुद्धिमते नमः
अद्वैतात्मास्पर्शवेद्युद्धारकृते नमः
अजीर्णाम्नायविदे नमः
अध्वर्युसत्तमाय नमः
अर्कवारार्चनप्रियाय नमः
अर्कसंप्राप्तवैभवाय नमः
अव्ययाजाक्षय इमेत्यादिप्रश्नार्थवित्तमाय नमः
अखंडज्ञानिने नमः
अन्ये तित्तिरयो भूत्वेत्यादिप्राप्तमहायशसे नमः
मंडलमित्यत्रयशोमंडलमंडिताय नमः

अयातयामं शुक्लं चेत्यत्र संभृतकीर्तये नमः
अज्ञाशिक्षकाय नमः
अथर्वप्रोक्ताशिरसि महिम्ने नमः
अश्वशालांकारिताय नमः
अनुत्त्वर्बाविप्रियंकिन्चिदाचार्यमतस्थि - ताय नमः
अयातयामयजुषां प्रसिध्यर्थमवतीर्णाय नमः
अतो वेदप्रमाणं इत्यादि नियमस्थिताय नमः
अनंतरूपधृते नमः
अनशनवृत्तिमते नमः
अद्भुतमहिम्ने नमः
अपरोक्षज्ञानिने नमः
अज्ञानकण्टकायनमः
अल्पज्ञानद्वेषिणे नमः
अवतारपुरुषाय नमः
अध्यक्षं वरयामासेत्यादि माहात्म्यसंयुक्ताय नमः
अश्वमेधपर्वोक्तमाहिम्ने नमः
अज्ञानद्वेषिणे नमः
अंगोपांगप्रत्यंगविदे नमः
अज्ञानतमोनाशाय नमः
अदितिदौहित्राय नमः
अगाधमाहिम्ने नमः
अनुच्छिष्टयजुःप्रसिद्धाय नमः
असाध्यकार्यसाधनदक्षाय नमः
अनन्यसाधारणशक्तये नमः
अयातयामयजुःपराय नमः
अहं ब्रह्मेत्याद्युद्धारकाय नमः
अहंकारमादित्येत्यादिलब्धकीर्तये नमः
अंकुरितस्तंभाय नमः
अल्पगुरुपरित्यागिने नमः
अधिकगुरुपरिगृहीताय नमः
अनेकगुरुसेविताय नमः
अनेकमुनिवंदिताय नमः
अघसंहर्त्रे नमः
अयोनिजगुरवे नमः
अग्रसंन्यासिने नमः
अग्रपूज्याय नमः
आदित्यावताराय नमः
आदित्यपुराणोक्तमाहिम्ने नमः
आंजनेयसतीर्थ्याय नमः
आर्तभागजेत्रे नमः
आत्मानंदैकनिष्ठाय नमः
आश्वलायनजामात्रे नमः
आदिशक्तिमंत्रोपदेष्ट्रे नमः
आद्यमावास्यातत्पराय नमः
आदित्याभिमुखस्नानकारिणे नमः
आदिमैथिलगुरवे नमः
आदिजनकपूजिताय नमः
आदिप्रवाहाभिमुखस्नानतत्पराय नमः
आदिविष्णोरपरावतारभूताय नमः
आवर्तानदीतीरसप्ततंतुस्थिताय नमः
आदित्यहयग्रीवावतारप्रसादाय नमः
आदिगुरवे नमः
आदिवेदार्थकोविदाय नमः
आत्मसर्वांतरस्तमेत्यादिवेदोक्तवैभवाय नमः
आदित्यसमविक्रमाय नमः
आदित्यमहिमानंदमग्नमानसाय नमः
आरुण्यन्तेवासिने नमः

आदित्येतिष्ठन्नित्याद्यंतर्यामिरहस्यविदे-
नमः
आकाशेतिष्ठन्नित्यादिमंत्रतत्त्वार्थकोवि-
दाय नमः

१००

आरुणिजेत्रे नमः
आचार्यकोपभीताय नमः
आदित्यांतेवासिने नमः
आध्वर्यवायवरप्रदाय नमः
आचार्याशानुसारिणे नमः
आचार्याभीष्टदायकाय नमः
आचार्यभक्तिमते नमः
आचार्यवाक्यानुकारिणे नमः
आचार्यदोषहंत्रे नमः
आचार्यमतपालकाय नमः
आदिशाखाविभागकृते नमः
आदिवेदप्रवर्तकाय नमः
आदिशाखाविभागकृते नमः
आध्वर्यवं क्वचिद्धोत्रमित्यत्राख्यात-
शक्तिमते नमः
आथर्वणऋषिज्ञाताय नमः
अथातोवेदइत्यत्राख्यातगुणमंडलाय -
नमः
आदिनारायणपौत्राय नमः
आदिविष्ण्वाप्ततेजसे नमः
आदिविष्णुप्राप्तमंत्राय नमः
आदिविष्ण्वाप्ततत्त्वविदे नमः
आदिविष्णुदत्तनामांकिताय नमः
आदिविष्णुशिष्याय नमः
आदिसंन्यासिने नमः
आदिविष्ण्वाप्तवैभवाय नमः
आदिशाखोपदेशकाय नमः
आत्मसंन्यासिने नमः
आपस्तंबमुनेस्तैत्तिरीयत्वप्रदात्रे नमः
इन्द्रसभासदे नमः
इन्द्रादिवसुरुद्रादिभागिने नमः
इमावेदेत्यादिमंत्रार्थविदे नमः
इक्ष्वाकुपूजिताय नमः
ईशावास्यरहस्यविदे नमः
उद्दालकांतेवासिने नमः
उत्तिष्ठशाकल्येतिवादिने नमः
उषस्तऋषिजेत्रे नमः
उत्तरादिक्प्रियाय नमः
उषावेत्युपनिषद्वेद्याय नमः
उद्दालकऋषिजेत्रे नमः
उदितार्कसमप्रभाय नमः
उदंतऋषिजेत्रे नमः
उमामहेश्वरस्वरूपाय नमः
उदयाचलतपःकृते नमः
उपनिषद्वेद्याय नमः
उपाकर्मस्वरूपज्ञाय नमः
ऊर्ध्वलोकप्रसिद्धाय नमः
ऋग्वेदशाखाध्येत्रे नमः
ऋग्वेदप्रसिद्धाय नमः
ऋषीणामष्टसहस्रविदितवैभवाय नमः
ऋग्यजुःसामतत्त्वज्ञाय नमः
ऋषिसंघप्रपूजिताय नमः
ऋषिसंघसमावृताय नमः
ऋषयस्त्वेकवत्सर्वेइतिप्रोक्तपराक्रमाय
नमः
ऋषिरूपसूर्याय नमः
ऋषिमंडलगुरवे नमः
एकायनशाखाभर्त्रे नमः

एकऋषिशाखावलंबिने नमः
एकवराय नमः
एकवत्सर्वमुनयइत्यत्राख्यातवैभवाय नमः
एकायनवेदविदे नमः
एकआसीद्यजुर्वेस्तमित्यादिरहस्यविदे नमः
ऐश्वर्यसंपन्नाय नमः
ओंकाररूपिणे नमः
ओंकारतत्त्वविदे नमः
ओतंश्चप्रोतश्चेत्यादिशास्त्रे नमः
ॐ खंब्रह्मेतिमंत्रार्थकोविदाय नमः
ओतंचप्रोतंचेत्यादिविदे नमः
औखेयगुरवे नमः
औखेयऋषेस्तैत्तिरीयत्वप्रदात्रे नमः
औदुंबरप्रभावज्ञाय नमः
औपगायनाद्यष्टसहस्रऋषिमंडलगुरवे नमः
औपगायनमुख्याम्नायादिशाखाप्रदात्रे नमः
कर्मऋषेस्तैत्तिरीयत्वप्रदात्रे नमः
कण्वगुरवे नमः
कर्दमज्ञातवैभवाय नमः
कल्क्यवताराचार्याय नमः
कमंडलुधराय नमः
कल्याणनामधेयाय नमः
कश्यपदौहित्राय नमः
कण्ववरप्रदात्रे नमः
कण्वानुग्रहकृते नमः
कहोलऋषिजेत्रे नमः
कतमोयाज्ञवल्क्येत्यत्राख्यातवैभवाय नमः
कतिदेवायाज्ञवल्क्येत्यत्राख्यातसुकीर्तये नमः
कतिरुद्राइतिप्रश्नादागतोत्तमगौरवाय नमः
कर्मकांडासक्तगुरुत्यक्ताय नमः
करामलकवत्सन्नकृते नमः

कविभंजनाय नमः
कपिलजामात्रे नमः
कर्दमाद्याश्रमिणे नमः
कल्याणात्मने नमः
कार्तिकमासोद्भवाय नमः
कात्यायनीपतये नमः
कात्यायनोपाध्यायाय नमः
कातायगुरवे नमः
कात्यायनजनकाय नमः
कात्यायनीदैन्यध्वंसिने नमः
कांच्यांब्रह्माश्वमेधस्थाय नमः
काश्यांपंचगंगासठस्थिताय नमः

२००

काण्वादिकामधेनवे नमः
कांडमंत्रविभागकृते नमः
कांडब्राह्मणोक्तवैभवाय नमः
कातीयचिंतामणये नमः
काण्वादीनांत्रिपंचानांऋषीणांभुक्तिदायकाय नमः
कारणजन्मने नमः
कामधेनुप्रभावज्ञाय नमः
कातीयसूत्रकारयित्रे नमः
किंदेवतोस्यामित्यत्रकुवादिमतभंजनाय नमः
किंदेवतोस्यामित्यस्मिन्प्राप्तयशसे नमः
किंदेवतोस्यामित्यादिशाकल्याक्षेपतितिक्षवे नमः
कुतर्कवादकुठाराय नमः
कुतर्कवादिधिःकारभानवे नमः
कुत्सिताक्षेपचक्षुःश्रवपक्षिराजाय नमः

कुरुभूमौतपःकृते नमः
कुरुपांचालदेशस्थिताय नमः
कुरुभूमिवनमध्यपर्णशालावासिने नमः
कृतयुगावताराय नमः
कृष्णांशसंभवाय नमः
कृष्णदर्शनोत्सुकाय नमः
कृष्णकल्याणगृहीतानंतरूपाय नमः
कृत्वासविधिवत्पूजामाचार्यायेतिकीर्तिमते नमः
क्रुद्धगुरुत्यक्ताय नमः
कर्मसंन्यासिने नमः
कोवाविष्णुर्दैवत्वइत्यगाधकथान्विताय नमः
कोटीसूर्यप्रकाशाय नमः
कौंडिन्यऋषेस्तैत्तिरीयत्वदात्रे नमः
गंधर्वजेत्रे नमः
गंधर्वराजगुरवे नमः
गवामुज्जीवनोत्सुकाय नमः
गर्दभाविपीतमतजेत्रे नमः
गर्ववर्जिताय नमः
गर्भस्थकालाभ्यस्तवेदाय नमः
गालवगुरवे नमः
गार्ग्यरमणाय नमः
गार्ग्यमनःप्रियाय नमः
गार्ग्येयज्ञानप्रदायकाय नमः
गार्ग्यद्रिवाज्रिणे नमः
गार्गीब्राह्मणवैभवाय नमः
गार्गीमर्मज्ञाय नमः
गायत्रहृदयाभिज्ञाय नमः
गायत्रदकारऋषये नमः
गायत्रब्रह्मतत्त्वविदे नमः
गायत्रवरलब्धाय नमः
गायत्रमंत्रतत्त्वज्ञाय नमः
गायत्रस्वरूपज्ञाय नमः
गायत्रप्रसादान्विताय नमः
गायत्रमंत्रसारज्ञाय नमः
गार्गीवंदिताय नमः
गार्गीप्रश्नोत्तरदात्रे नमः
गुर्वाज्ञापरिपालकाय नमः
गुरुभक्तिपराय नमः
गुरुभक्तिसमान्विताय नमः
गुरुतत्त्वज्ञाय नमः
गुरुतत्पराय नमः
गुर्वभिमतज्ञाय नमः
गुरुपूजातत्पराय नमः
गुरूणांगुरवे नमः
गुरुवाक्यानुसारिणे नमः
गुरुमंत्रोपदेशकाय नमः
गुर्वर्थत्यक्तवेदैकदेशकाय नमः
गुरुशक्तिसमान्विताय नमः
गुरुदानदात्रे नमः
गुरुसंतोषकारिणे नमः
गुरवेप्रत्यर्पितयजुर्वेदैकदेशकाय नमः
गुर्वोज्ञातयजुर्वेदाभिज्ञाय नमः
गुरुवशादाम्नायवेत्त्रे नमः
गुरवेत्यक्तमत्सराय नमः
गुरुवाक्यपालकाय नमः
गोगणप्राणदात्रे नमः
गोसहस्राधिपाय नमः
गोपादाख्यातमहिम्ने नमः
गोदावरीतीरवासिने नमः
गोतमब्रह्मोपदेशदात्रे नमः

गौतमदेशिकाय नमः
घनाय नम,
घनतपोमहिमान्विताय नमः
चतुर्वेदसमन्विताय नमः
चतुश्चत्वरिंशद्देवमनकृते नमः
चंद्रकांतजनकाय नमः
चरकाध्वर्युकारणाय नमः
चक्रवर्तिगुरवे नमः
चलाचलविभागज्ञाय नमः
चतुर्विंशद्वर्षकालमातृगर्भतपःकृते नमः
चतुर्वेदाभिज्ञाय नमः
चतुर्विंशाक्षरमनोःपारायणषट्कव्रताय नमः
चतुर्दशमहाविद्यापरिपूर्णाय नमः
चारविक्रमाय नमः
छर्दिब्राह्मणबीजाय नमः
छर्दिरूपवेदप्रसादगायत्राय नमः
चिदंबररहस्यज्ञाय नमः
चित्ररथब्रह्मदात्रे नमः
चित्ररथचरित्राय नमः
ज्ञानाधिकाय नमः
ज्ञानज्ञेयस्वरूपविज्ञाय नमः
जनकस्यत्रिजिज्ञासापरिष्करणपंडिताय नमः
जनकानांमहागुरवे नमः
जंबुवतीनदीतीरजन्मने नमः
जनकविश्वजिद्यज्ञरक्षकाय नमः
जनकाश्वमेधकारयित्रे नमः

२००

जनकस्यानदतीर्थकारिणे नमः
जनकयज्ञाग्रपूजिताय नमः
जनकाज्ञानदंभोलये नमः
जनकस्याश्वमेधांगदेवऋषिज्ञानदेशिकाय नमः
जनकादिमुमुक्षूणांजगद्बीजप्रदर्शिनाय नमः
जनकाज्ञानदावाग्निपयोदाय नमः
जनकाज्ञानसंदेहपंकनाशप्रभाकराय नमः
जनकस्यब्रह्मविद्यापरीक्षापंडितोत्तमाय नमः
जबूखेरावासिन नमः
जनकसभाज्ञानांधकारभानवे नमः
जनकपूजिताय नमः
जगदाधारशास्त्रकृते नमः
जननीजठरेविष्णुमायातीतपरान्विताय नमः
जंबूसरःसौवर्णपुरवासिने नमः
जगद्गुरवे नमः
जंबूनदीसलिलप्रियाय नमः
जनकस्यजगत्तत्वप्रदर्शकाय नमः
जटामंडलमंडिताय नमः
जनकब्रह्मोपदेशकृते नमः
जनकाभयदायकाय नमः
जाबालस्याज्ञाननाशकाय नमः
जाबालऋषिजेत्रे नमः
जित्वाशैलिनीऋषिजेत्रे नमः
जैमिनिमानिताय नमः
तपोधनाय नमः
तपोबलसमन्विताय नमः
तत्त्वविदामग्रगण्याय नमः
तथेत्याचार्यवाक्यस्यपरिपालनपंडिताय नमः
तपोमायाभिषिक्ताय नमः

तर्काध्यायोक्तमहिम्ने नमः
तत्त्वविदांवरिष्ठाय नमः
तस्याउपस्थानमितिसंत्रमर्मज्ञाय नमः
तारकब्रह्ममंत्रदात्रे नमः
तावत्पूर्वार्विशुद्धानियजूंष्येवेतिमूलविदे नमः
तुबुकऋषेस्तैत्तिरीयत्वदात्रे नमः
तुरीयपादतत्त्वार्थविदुषे नमः
तैत्तिरीययजुर्बीजाय नमः
त्रयीधामाप्तवैभवाय नमः
त्रिमूर्त्यात्मने नमः
त्रिदंडसंन्यासविधिप्रदर्शकाय नमः
त्रिशूलडमरुकमंडलुदंडपाणये नमः
त्रिकालज्ञाय नमः
त्रिलोकगुरुशिष्याय नमः
त्रिमूर्द्धांतेवासिने नमः
त्रिमूर्तिकरुणालब्धाय नमः
त्रिलोचनप्रसादलब्धाय नमः
त्रिलोचनपूजिताय नमः
त्रिकालपूज्याय नमः
त्रिभुवनख्याताय नमः
त्रिदंडसंन्यासकृते नमः
त्रिपुंड्रधारिणे नमः
त्रिमूर्त्याकारनिभाय नमः
त्रिनेत्राय नमः
दत्तापहारद्वेषिणे नमः
दशपंचशाखाविभागकृते नमः
दयासुधासिंधवे नमः
दक्षिणामूर्तिस्वरूपाय नमः
दंडकमंडलुयुक्तकराय नमः
दानसमर्थाय नमः
दानतत्पराय नमः
द्वादशसहस्रवत्सरसूर्योपासकाय नमः
द्वादशकरतत्पराय नमः
द्वादशात्मावताराय नमः
द्वादशविधनामांकिताय नमः
द्वापरज्ञाय नमः
द्वादशसहस्रवर्षपंचाग्निमध्यस्थाय नमः
द्वादशजन्मने नमः
द्वादशसहस्रवर्षयज्ञदक्षिणान्विताय नमः
द्वादशार्कनमस्करणैकमहाव्रताय नमः
द्विजवृंदसमावृताय नमः
दिवाकरात्सकृत्प्राप्तसर्ववेदांतपारगाय नमः
दिनमणये नमः
दीर्घतपसे नमः
दुर्वादखंडनाय नमः
दुष्टदूराय नमः
दुष्टनिग्रहतत्पराय नमः
दुष्टद्विजशिक्षकाय नमः
दुष्टतापसगर्वाद्रिभंजनैकमहाशनये नमः
देवरातपुत्राय नमः
देवगंधर्वपूजिताय नमः
देवपूजनतत्पराय नमः
देवतागुरवे नमः
देवकर्माधिकारसूत्रप्रणयित्रे नमः
देवलज्ञातयशसे नमः
देवमार्गप्रतिष्ठापनाचार्याय नमः
दृढव्रताय नमः
देवादिगुरुवाक्यपालनकृतनिश्चयाय नमः
दैवज्ञाय नमः
दैत्यंविदार्यतानानयेतिविष्णुप्रभावाधिये नमः

दोषयुक्तगुरुत्यक्ताय नमः
दौर्भाग्यहंत्रे नमः
धर्मसंस्थापनाय नमः
धर्मपूजिताय नमः
धर्मशास्त्रोपदेशकाय नमः
धेनुपालनतत्पराय नमः
ध्रुवपूजिताय नमः
नवऋषीणांनमनदात्रे नमः
नारायणांतेवासिने नमः
नारायणपौत्राय नमः
नारदज्ञातवैभवाय नमः

४००

नारायणाश्रमाख्यातमाहिम्ने नमः
निर्जीवानांजीवदात्रे नमः
निर्जीवस्तंभजीवदाय नमः
निर्वाणज्ञानिने नमः
निग्रहानुग्रहसमर्थाय नमः
नृसिंहसमविक्रमाय नमः
नृपज्ञानपरीक्षादक्षाय नमः
नृपाविवेककर्त्रे नमः
नेत्रत्रयाय नमः
परमात्मविदे नमः
परमाय नमः
परमधार्मिकाय नमः
परब्रह्मस्वरूपिणे नमः
पंचारण्यमध्यस्थभास्करक्षेत्रानुष्ठितसत्र -
पराशरपुरोहिताय नमः
परिव्राजकाचार्यवर्याय नमः
परमबद्धकाचार्याय नमः
परभयंकराय नमः
पंचदशशाखापरमगुरवे नमः
परमधर्मज्ञाय नमः
पराशरोक्तप्रभावाय नमः
पराशरवेदितवैभवाय नमः
परमाक्षररूपविदे नमः
परमहर्षसमन्विताय नमः
परिशिष्टकर्त्रे नमः
परिशेषपरिज्ञात्रे नमः
परमहर्षिताय नमः
परिपूर्णमनोरथाय नमः
परमपवित्राय नमः
परमेष्ठ्यादिपरमपरस्थाय नमः
परमेष्ठ्यादिपरंपराप्राप्तवेदतत्पराय नमः
पर्णशालावासाय नमः
परिशिष्टविशेषविदे नमः
परीक्षितपुत्रगुरवे नमः
परिशिष्टअष्टादशग्रंथकर्त्रे नमः
पराशरपुत्रोपाध्यायाय नमः
परमविज्ञानयुक्ताय नमः
परमसन्मुनिहिताय नमः
पट्टाभिषेकयुक्ताय नमः
परमगुरुशिष्याय नमः
पंचाशद्वर्षपर्यंतमाज्यधाराहोमकृते नमः
पत्नीद्वयविराजिताय नमः
पावनाय नमः
पाखंडद्वेषिणे नमः
पाराशर्योपनयनकृते नमः
पाराशर्यद्वेषिकालाय नमः
पाराशरगुरवे नमः
पावनचरित्राय नमः
पाराशार्याश्रमिणांप्रथमाय नमः

पारिकांक्षिणे नमः
पारायणव्रतव्रताय नमः
पिप्पलादगुरवे नमः
पिप्पलादज्ञानकर्त्रे नमः
पुत्रब्राह्मणोक्तयशसे नम
पुराणाचार्याय नमः
पुण्यकृताश्वस्तंभाय नमः
पुण्यापुण्यविज्ञानरताय नमः
पुण्यारण्योपवासिने नमः
पुण्यारण्यविभवाय नमः
पुत्रशिष्यसमावृताय नमः
पुरातनमहिम्ने नमः
पुराणाख्यातवैभवाय नमः
पितामहसत्कृताय नमः
पितामहाध्वराध्यक्षाय नमः
पितृवाक्यपरिपालनाय नमः
पूर्णमंत्राधिकाराय नमः
पूर्णानंदसमन्विताय नमः
पूर्णिमाऽभिषिक्ताय नमः
पैलपूजिताय नमः
पैंगलगुरवे नमः
पैंगलज्ञानदात्रे नमः
पैंगलोपदेशकाय नमः
पैलसंमानिताय नमः
पारिप्लवादिविदितयशसे नमः
प्रतापवते नमः
प्रभाकरप्राप्तविद्याय नमः
प्रकृतिपुरुषविवेककर्त्रे नमः
प्रभाकरप्रीतिकराय नमः
प्रवरोक्तप्रभवाय नमः
प्रथमपूज्याय नमः

प्रतिभास्यतितिवेदइत्यर्कैवरसंयुताय नमः
प्रभाकरप्रसादात्तप्रधानयजुषांगुरवे नमः
प्रसिद्धकर्त्रे नमः
प्रणवोवृक्षबीजस्यादितिवैदिकमूलविदे
नमः
प्रतिज्ञापरिपालकाय नमः
प्रथमजनकगुरवे नमः
पारिभाष्यादिगुरवे नमः
प्रथमश्रुतितत्त्वज्ञाय नमः
प्रत्यक्षदेवशिष्याय नमः
प्रचंडाज्ञाकर्त्रे नमः
प्रबलश्रुत्युक्तकर्त्रे नमः
प्रथमवेदप्रसिद्धाय नमः
प्रकृष्टधिये नमः
प्राणदात्रे नमः
प्राणायामपरायणाय नमः
प्राणायामप्रभावज्ञाय नमः
प्रथमायांश्रुतौसत्यांनान्यामित्यादिशास्त्र -
कृते नमः
फलीकृतस्तंभाय नमः
बहुपुराणप्रसिद्धाय नमः
बर्कृवृष्णिमतजेत्रे नमः
बहुगुणान्विताय नमः

५००

बहुबाहुविभूषिताय नमः
बदर्याश्रमवासिने नमः
बहुदक्षिणायागस्थाय नमः
बहुप्रमाणसिद्धाय नमः
बृहच्छाखाध्येत्रे नमः
बृहद्याज्ञवल्क्याय नमः
बृहदारण्यवैभवाय नमः

ब्रह्मर्षये नमः
ब्रह्मदत्तगुरवे नमः
ब्रह्मरातपुत्राय नमः
ब्रह्मांशसंभवाय नमः
ब्रह्मदत्ताश्वमेधस्थाय नमः
ब्रह्मक्षत्रादिगुरवे नमः
ब्रह्महत्याभयभ्रांतगुरोर्दोषविनाशायनाय नमः
ब्रह्ममानसपुत्राय नमः
ब्रह्मलब्धगायत्रहृदयाय नमः
ब्रह्मदत्तयोगतत्पदाय नमः
ब्रह्मविद्यापारंगताय नमः
ब्रह्मविद्यास्वरूपविदे नमः
ब्रह्मविद्याप्राबल्यकारणजन्मने नमः
ब्रह्मविद्यापरीक्षार्थमागताय नमः
ब्रह्मविद्याभिवृद्ध्यर्थमवतीर्णाय नमः
ब्रह्माधिकाराग्निदग्धशाकल्योज्जीवनोपायाय नमः
ब्रह्मविष्णुशिवशिष्याय नमः
ब्रह्मस्थापितवेदशाय नमः
ब्रह्मणास्थापितंपूर्वमित्यवेरिवर्कार्तिमते नमः
ब्रह्मांशसंभूताय नमः
ब्रह्मेष्टकृते नमः
ब्रह्मविद्यानिलयाय नमः
ब्रह्मविद्यासंप्रदायगुरवे नमः
ब्रह्मनिष्ठागरिष्ठाय नमः
ब्रह्मवादिने नमः
ब्रह्मविद्यादानशीलाय नमः
ब्रह्मपुराणाक्तमहिम्ने नमः
ब्रह्मांडोक्तकीर्तये नमः
ब्रह्मशिष्याय नमः
ब्रह्मरातजठराब्धिसुधामयूखाय नमः
ब्रह्मिष्ठब्रह्मणे नमः
ब्रह्मज्ञाय नमः
ब्रह्मबीजाय नमः
ब्राह्मणद्वेषसंदग्धशाकल्यप्राणरक्षकाय नमः
ब्राह्मणानांब्रह्मविद्यादृढकरणाय नमः
ब्राह्मण्याय नमः
ब्राह्मणप्रियाय नमः
ब्राह्मणसमावृताय नमः
बीजमेवपुरस्कुर्येत्युक्तवते नमः
बुद्धिमालिन्यहंत्रे नमः
बुद्धिवृद्धिप्रदायकाय नमः
बुद्धिनैर्मल्यप्रदात्रे नमः
बैजवापायनवेदबीजाय नमः
बैजवापगुरवे नमः
बौधायनसुतायवेददात्रे नमः
बौद्धमतनिरासकाय नमः
भक्तैतत्तेमयोदितामितिवादिने नमः
भक्तदारिद्र्यभंजनाय नमः
भक्ताभीष्टफलप्रदायकाय नमः
भक्तपापहंत्रे नमः
भद्रप्रदनाम्ने नमः
भास्करार्चनतत्पराय नमः
भारद्वाजतारकमंत्रोपदेशकाय नमः
भानुगुप्तयजुर्वेदप्रकाशकाय नमः
भारद्वाजमतजेत्रे नमः
भास्करदिनजन्मने नमः
भास्करानुग्रहप्राप्तयजुर्वेदसंप्रदायप्रवर्तकाय नमः

भानुगुप्तायातयामयजुर्वेदैकनिष्ठिताय नमः
भाविवृत्तांतमित्यादिपठ्यमानप्रसिद्धमते नमः
भुज्युमुनिमतजेत्रे नमः
भुक्तिमुक्तिफलप्रदाय नमः
भूपतिगुरवे नमः
भृगुविदितचरित्राय नमः
भृगुकर्दमसंवेद्यमहागाधक्रोधसमान्विताय नमः
भृशमिंद्रियजेत्रे नमः
मनःसंन्यासिने नमः
मध्यंदिनवेददात्रे नमः
मध्याह्नार्कसमप्रभाय नमः
मंडलब्राह्मणप्रियाय नमः
मधुकांडोक्तमहिम्ने नमः
महायोगिपुंगवाय नमः
महासौरमंत्रान्विताय नमः
महाशांतिविधानज्ञाय नमः
महातेजसे नमः
महामेधजनकाय नमः
महात्मने नमः
मध्यंदिनमहागुरवे नमः
मध्यंदिनयजुःप्रियाय नमः
मध्याह्नार्चनतत्पराय नमः
मदधीतंत्यजेत्यत्रमहायोगप्रदर्शकाय नमः
महते नमः
महाराजगुरवे नमः
महामुनिपूजिताय नमः
महामुनिवृंदपरिवेष्टिताय नमः
महामुनिसंघसमावृताय नमः
मध्याह्नमहिमाभिज्ञाय नमः
मध्यंदिनमनुष्याणामित्यत्राख्यातमतविदे नमः
मधुकगुरवे नमः
मंत्रब्राह्मणतत्पराय नमः
मंत्राक्षतप्रभावज्ञाय नमः
मन्नाम्नाचात्रविश्राममित्यत्रशिवतत्पराय नमः
महायोगिने नमः
मत्तोऽधीतंवेदजालंत्यजेत्यादिगुरुवाक्य –कृते नमः

६००

मदधीतंत्यजेत्यत्रमहदाश्चर्यैककर्मकृते नमः
ममाप्बलंत्वयेत्यत्रमार्तंडसमविक्रमाय नमः
मखनायकाय नमः
महासभ्येंद्राय नमः
महामहिमान्विताय नमः
महेंद्रसभासदे नमः
मनःस्विने नमः
मार्तंडमंडलप्रवेशाय नमः
मायातीताय नमः
माध्यंदिनवरप्रदात्रे नमः
माकोपंकुरुयज्ञेशेत्याकाशाख्यातवैभवाय नमः
मातुलद्वेषिणे नमः
मार्तंडमतमंडनाय नमः
मायावादिजनविद्वेषिणे नमः
मायविद्याद्विजद्वेषिणे नमः
मातृगर्भस्थकालैकपरब्रह्मोपदेशकाय नमः
मातृगर्भस्थविघ्नमुक्तपरब्रह्मोपदेशभाजिने नमः

मातृगर्भस्थतत्त्वाय नमः
मातृगर्भस्थकालाप्तविष्णुप्रोक्तरहस्यविदे नमः
माघपूर्णिमायांकृताभिषेकाय नमः
मातुलमहापातकभंजनाय नमः
मिथिलापुरवासाय नमः
मिहिरावताराय नमः
मित्रावरुणस्वरूपज्ञाय नमः
मुनिवेषमिहिराय नमः
मुनीनांककुदे नमः
मुनिमानिताय नमः
मुहूर्तशास्त्रतत्त्वज्ञाय नमः
मुनिकांडोक्तमहिम्ने नमः
मुनिकांडैकवेद्याय नमः
मुनीश्वराय नमः
मुहूर्तंसहूतांदाहइत्यर्कवचनानुगाय नमः
मुहूर्तमात्रसंलब्धसर्ववेदांतमंडलाय नमः
मुनिमंडलमंडिताय नमः
मुनिपुंगवपूजिताय नमः
मूर्तिमत्कृष्णयजुर्वमनकृते नमः
मेरुपृष्ठस्थाय नमः
मैत्रेयीप्राणनाथाय नमः
मैत्रेय्यास्तत्त्वदायकाय नमः
यज्ञवल्कपुत्राय नमः
यज्ञसूत्रधारिणे नमः
यज्ञावताराय नमः
यज्ञशिष्याय नमः
यज्ञवर्याय नमः
यजुर्मूलकारणाय नमः
यजुषांयजमानाय नमः
यजुर्वेदमहावाक्यफलास्वादनपंडिताय नमः
यथाकामप्रकाशाधिये नमः
यथार्थविदे नमः
यज्ञपूजिताय नमः
यथेष्टमार्गसंचारिणे नमः
यथाभिलषितमार्गस्थाय नमः
यदेवसाक्षादित्यादिप्रख्यातपराक्रमाय नमः
यश्चंद्रतारकेत्यस्मिन्समुपात्तयशोधनाय नमः
यस्तमसेत्यादिगीतकीर्तिदिङ्मंडलाय नमः
यस्तेजसेतिमंत्रोक्तवैभवाय नमः
यःसर्वेष्वितिमंत्रैकरहस्यज्ञानविदे नमः
यःप्राणेतिष्ठन्नित्यत्रवागतीतस्वरूपज्ञाय नमः
यश्चक्षुषेतिप्रश्नेऽस्मिश्चलाचलविशेषविदे नमः
यदेतन्मंडलीमितिमंत्रतत्त्वार्थकोविदाय नमः
यद्वेत्रेतितिमंत्रेषुजनकाज्ञानभंजनाय नमः
यजुर्वेदंसात्त्विकंस्यादितिगुणभेदविदे नमः
यजुरोंकाररूपेणवर्ततइतिविशेषविदे नमः
यतिराजपट्टाभिषिक्ताय नमः
यतीश्वराय नमः
यतिने नमः
याजुषादित्यानीमानिशुक्लानिइत्याम्नायोक्तकीर्तिमते नमः
यातयामविवर्जिताय नमः
यातयामायातयामविभागकृते नमः
यातयामयजुस्त्यागिने नमः
याज्ञवल्क्याद्याज्ञवल्क्येत्याद्याचार्यान्वयान्विताय नमः

याज्ञवल्क्यंसमाहूयेत्यादिमाहात्म्यमंडि --
ताय नमः
याज्ञवल्क्यमतोऽस्थित्वेतिविस्तरितकीर्ति-
मते नमः
याजयामासविप्रेंद्रइत्यत्राख्यातकीर्तये नमः
युधिष्ठिराश्वमेधपूजिताय नमः
योगियाज्ञवल्क्याय नमः
योगानंदमुनीश्वराय नमः
योगशास्त्रप्रणेत्रे नमः
योगमार्गोपदेशकाय नमः
योगज्ञाय नमः
योगशिरोमणये नमः
योगीश्वरद्वादशप्रियाय नमः
योदिनेत्यत्रविख्याताय नमः
योगींद्रवंदिताय नमः
योदिश्रुतिष्ठन्नित्यत्रप्रख्याताध्यात्मविद्याय
नमः
योगसामर्थ्ययुक्ताय नमः
योवाचितिष्ठन्नित्यत्रवागतीतस्वरूपज्ञाय
नमः
योमनसितिष्ठन्नितिसाम्राज्यार्हस्वरूपभृते
नमः
योरेतसीनिमंत्रोक्तप्रश्नज्ञानेन.पंडिताय
नमः
योहवैज्येष्ठमित्यत्रसर्वश्रेष्ठसमन्विताय
नमः
योगिनामग्रगण्याय नमः
योगिराजाय नमः
योगींद्राय नमः
रथमारोप्यतंभानुरित्याद्युक्तप्रतापवते
नमः
रथारूढाय नमः
रविस्तोत्रपारायणाय नमः
रविप्रीतिकरसत्रयागकर्त्रे नमः
रविवासरजन्मने नमः
रहस्यार्थविशारदाय नमः
रामतंत्ररहस्यज्ञाय नमः

७००

रामदर्शनतत्पराय नमः
राममंत्रप्रदात्रे नमः
रुद्राध्यायप्रभावज्ञाय नमः
रुधिराक्तयजुर्वमनकृते नमः
रुद्रमंत्रपारायणाय नमः
रोमहर्षणशिष्याय नमः
राजगुरवे नमः
लक्ष्मीपौत्राय नमः
लक्षगायत्रीजपान्विताय नमः
लोकोपकारिणे नमः
लोकगुरवे नमः
लोकपूजिताय नमः
लोकाद्भुतकार्यकृते नमः
वसिष्ठवद्गरिष्ठाय नमः
वमनजाड्यापहंत्रे नमः
वसुंचापिसमाहूयेत्यादिपर्वस्थकीर्तिमते
नमः
वरमुनींद्राय नमः
व्यवस्थितप्रकरणयजुर्वेदप्रकाशकृते नमः
वाजिने नमः
वाजसनिपुत्राय नमः
वाजसनेयिने नमः
वायुपुराणोक्तवैभवाय नमः

वायुभक्षणतत्पराय नमः
वाजिमंत्रार्थसिद्धाय नमः
वाजिरूपधारिणे नमः
वाजिविप्रगुरवे नमः
व्यासोक्तमहिम्ने नमः
व्याससुतोपनयनकारिणे नमः
व्यासवेदोपदेशकाय नमः
व्यासाचार्याय नमः
वाणीवक्त्राय नमः
वामदेवार्चनप्रियविप्रेंद्राय नमः
वाजिशब्दप्रसिद्धाय नमः
वाजिवेदप्रभावज्ञाय नमः
वाजिमंत्ररहस्यविदे नमः
वाजिनामाष्टकान्विताय नमः
वाजिग्रीवासवागभूविजृंभितदिगंतरकीर्तये नमः
वाजपेयातिरात्रादियज्ञदीक्षासमन्विताय-नमः
विश्वावसोःसंशयघ्नाय नमः
विजयजनकाय नमः
विष्ण्ववताराय नमः
विष्णुपुराणोक्तवैभवाय नमः
विश्वावसुज्ञानगुरवे नमः
विप्रेंद्राय नमः
विदेहवाजिमेधयाजकाय नमः
विभावसोर्वरबलात्सर्ववेदांतपारगाय नमः
विश्वावसुविवेकदाय नमः
विश्वावसुविभागदाय नमः
विदग्धविद्यावैतंडविवादेविश्वरूपधृते नमः
विरजाक्षेत्रशिवलिंगप्रतिष्ठात्रे नमः
विरजातीर्थेतपःकृते नमः

विद्यमानेगुरौजनकसख्याय नमः
विदेहसभापतये नमः
विष्णोराप्तजन्मने नमः
विष्णुमंत्रैकहृष्टधिये नमः
वीतमत्सराय नमः
वीर्यवत्तरवेददाय नमः
वीर्यवत्तरवेदैकपालनेकृतनिश्चयाय नम
वृद्धयाज्ञवल्क्याय नमः
वेदमार्गप्रकाशकृते नमः
वेदभाष्यार्थकोविदाय नमः
वेदशरीराय नमः
वेद्यमतये नमः
वेदांतज्ञानविच्छ्रेष्ठाय नमः
वेदावेदविभागविदे नमः
वेदंसमर्पयामासेत्यसाधारणकर्मकृते नमः
वेदपुरुषशिष्याय नमः
वेदोऽनादिशब्दमयइत्यादिप्रमाणविदे नमः
वेदवृक्षमहावाक्यफलास्वादनपंडिताय नमः
वेदवृक्षमूलैकतत्त्वविदे नमः
वेदैकविभागकरणोत्सुकाय नमः
वेदांतवेद्याय नमः
वेदपारायणप्रीताय नमः
वेदोक्तमहिम्ने नमः
वेदांतज्ञानिने नमः
वेदानाहृत्यचौरेणेत्यागमितप्रवृत्तिविदे नमः
वेदवृक्षोद्भवंनित्यमित्यस्मिन्प्राप्तमंगलाय नमः
वेदवृक्षस्यमूलविदे नमः

वैदेहगुरवे नमः
वैदेहापाध्यायाय नमः
वैदेहाध्यापकाय नमः
वैदेहदेशिकाय नमः
वैदेहाश्वमेधगवांपतये नमः
वैदेहविवेकदात्रे नमः
वैशंपायनवादभेदकाय नमः
वैदेहाभयदायकाय नमः
वैशंपायनवैतंडवादखंडनपंडिताय नमः
वैशंपायनवेदैकदानशौंडाय नमः
वैकुंठस्थब्रह्मरातसुनंदानंदवर्धनाय नमः
वैशंपायनसह्याद्रिभंजनैकमहाशनये नमः
शतपथब्राह्मणबीजाय नमः
शततारोद्भवाय नमः
शरत्कालजन्मने नमः
शतानीकगुरवे नमः
शक्तिमंत्रोपदेशकाय नमः
शतशिष्यसमावृताय नमः
शततारासंभवाय नमः
शतशिष्याध्ययनकर्त्रे नमः
शतपथपरिष्कर्त्रे नमः
शरणागतगंधर्वाय नमः

८००

शरणागतशाकल्याय नमः
शरणागतशाकल्यप्राणदानव्रताय नमः
शरणागतगंधर्वशतसंदेहभंजकाय नमः
शरणागतमैत्रेयीशाश्वतज्ञानबोधकाय-
नमः
शंकरप्रसादलब्धाय नमः
शब्दब्रह्ममयोऽनादिरित्याद्याम्नायमाहा
त्म्यविदे नमः
शंखचक्रत्रिशूलगदाडमरुकायुधाय नमः
शतसंशयविच्छेत्रे नमः
शंभुशिष्याय नमः
शाकल्यजीवदात्रे नमः
शांत्यादिगुणसंयुताय नमः
शांतिपर्वस्थवैभवाय नमः
शास्त्रकर्त्रे नमः
शापेयदेशिकाय नमः
शाश्वताय नमः
शंखचक्रगदापद्महस्ताय नमः
शाकल्यप्राणप्रतिष्ठाप्रतिष्ठापनाचार्याय
नमः
शाकल्याभयदायकाय नमः
शास्त्रविच्छ्रेष्ठाय नमः
शाखापरंपराचार्याय नमः
शाश्वतिकपदाधिष्ठिताय नमः
शाकल्यसंस्तुताय नमः
शाखारंडत्वदोषादिनिराकरणपंडिताय
नमः
शाखाश्वक्रेपंचदशकाण्वाद्याश्चेतिकीर्तिमते
नमः
शाकल्यप्राणसन्मानादिदात्रे नमः
शिवाराधनतत्पराय नमः
शिवलिंगप्रतिष्ठात्रे नमः
शिवाय नमः
शिवशिष्याय नमः
शिष्यबुद्धिपरीक्षकाय नमः
शिखाकारास्तत्रशाखेतिश्रुतिमूलविदे नमः
श्रीराममंत्रतत्त्वज्ञाय नमः
शुभप्रदाय नमः
शुद्धविग्रहाय नमः

शुद्धयाजुषप्रकाशकृते नमः
शुक्लोपासकाय नमः
शुक्लावताराय नमः
शुक्लयजुर्वेदपरायणाय नमः
शुक्लकृष्णयजुर्वेदकारणाय नमः
शुक्लंवायसनेयंस्यादित्यत्राख्यातकीर्तये नमः
शुष्कस्तंभप्राणदात्रे नमः
शुष्कस्तंभप्रसूनदाय नमः
शुष्कदारुणःफलप्रदाय नमः
शुद्धसत्त्वगुणोपेतऋग्यजुःसामाथर्वप्रकाशकृते नमः
शुक्लसमन्विताय नमः
शुक्लान्ययातयामानियजूंषिप्राप्तवते नमः
शुक्लाख्यंचयजुःपंचदशशाखाप्रवर्तकाय नमः
शुक्लांबरधराय नमः
शुक्लपक्षोद्भवाय नमः
श्वेतभस्मधारिणे नमः
शैववैष्णवमतोद्धारकाय नमः
शोकनाशकाय नमः
शोकप्रदाय नमः
शोभनचरित्राय नमः
षट्पुरालयकृताध्वरस्थाय नमः
षष्ठाध्यायस्थवैभवाय नमः
षडध्यायाप्तकीर्तिमते नमः
सरस्वतीसदावास्यवक्त्राय नमः
सर्वशास्त्रार्थतत्त्वज्ञाय नमः
सर्वऋषिष्युत्तमाय नमः
सभाध्यक्षाय नमः
सर्वब्राह्मणजेत्रे नमः
सभापूज्याय नमः
सर्वोत्तमगुणान्विताय नमः
सर्वोत्कृष्टज्ञानान्विताय नमः
सर्वभावज्ञाय नमः
सर्वेश्वरांशजाय नमः
सनकादिमुनिज्ञातवैभवाय नमः
सर्वमंत्रार्थतत्त्वविदे नमः
सब्रह्मभ्रूणस्थाय नमः
संगीतशास्त्रकर्त्रे नमः
स्कंदाराधननतपराय नमः
समाधियुक्ताय नमः
सदाध्यानपरायणाय नमः
सर्वदुःखप्रशमनाय नमः
सर्वलक्षणसंयुताय नमः
स्वयंदत्तापहारगुरुत्यक्ताय नमः
स्कंदवर्णितवैभवाय नमः
स्वच्छानंदान्विताय नमः
सत्यसंधाय नमः
सर्वभूतगुणज्ञाय नमः
सभामध्याविराजिताय नमः
सर्वभूतहितेरताय नमः
सर्वशास्त्रपारंगताय नमः
सतांवरिष्ठाय नमः
सम्यक्संगीयमानाय नमः
समुद्रोपासकाय नमः
सत्याषाढमुनेत्तैत्तिरीयत्वप्रदाय नमः
संन्यासाश्रमसंयुताय नमः
स्वयंकृतापराधमृतशाकल्यजीवदात्रे नमः
सभापर्वोक्तमाहिम्ने नमः
सरस्वतीसमाक्रांतमुखमंडनाय नमः
सहस्रांशुसमप्रभाय नमः

सरस्वतीपूजकाय नमः
सरस्वतीस्तोत्रकृते नमः
सर्वब्राह्मणसंवृताय नमः
सर्वशाखाध्येतृशिष्याय नमः
सर्वलोकगुर्वंतेवासिने नमः
सर्वप्रश्नोत्तरदानशौंडाय नमः
सर्वसंशयविच्छेत्रे नमः

१००

सरस्वतीविराजितवक्त्राय नमः
स्वयंनष्टस्यशाकल्यऋषेःप्राणदायकाय
नमः
सत्यानंदस्वरूपाय नमः
सम्राट्पूजिताय नमः
सत्यकाममतजेत्रे नमः
सत्त्वप्रधानवेदज्ञाय नमः
सहस्रस्वर्णयुतधेनूनांनेत्रे नमः
सत्यसंदोहाय नमः
सकलऋषिश्रेष्ठाय नमः
सर्वकलापरिपूर्णाय नमः
सकलागमज्ञाय नमः
समग्रकीर्तिसंयुक्ताय नमः
सर्ववेदपारगाय नमः
सनत्कुमारसंहितोक्तसत्कीर्तये नमः
सर्वानुक्रमणिकोक्तमहिम्ने नमः
सनकाय नमः
सनंदनाय नमः
सर्वंकषाय नमः
सनातनमूर्तये नमः
सन्मुनींद्राय नमः
सत्यात्मने नमः

सर्वज्ञमूर्तये नमः
स्वर्गलोकवासिने नमः
स्वयंप्रकाशमूर्तये नमः
सरस्वतीप्रसादलब्धाय नमः
सफलीकृतस्तंभाय नमः
सत्यसंकल्पाय नमः
सत्यमूर्तये नमः
सत्यवादिने नमः
सत्रयोगमहादीक्षासमन्विताय नमः
सवेदगर्भाय नमः
सर्वज्ञाय नमः
सर्वविदे नमः
सर्ववेदांतपारंगताय नमः
सर्वभाषाभिज्ञाय नमः
सर्वतंत्रस्वतंत्राय नमः
सनंदाय नमः
सामश्रवदेशिकाय नमः
सामशाखाचार्याय नमः
सावित्रमंत्रसारज्ञाय नमः
सामवेदोक्तवैभवाय नमः
स्कांदोक्तमहामहिम्ने नमः
सांगोपांगविध्यनुष्ठिताय नमः
साम्राज्यार्हाय नमः
सांख्ययोगसारज्ञाय नमः
सारांशधर्मकर्त्रे नमः
सारभूतयजुर्वेदाय नमः
सुभूर्मायातीताय नमः
सुनंदानंदवर्धनाय नमः
सुप्रसिद्धकर्त्रे नमः
सुधर्मज्ञाय नमः
सुमनसांकामनाकल्पवृक्षाय नमः

सुमंतुसंमानिताय नमः
सुदुष्करतपःकृते नमः
सुतशार्दूलसंयुक्ताय नमः
सुनंदानंदकंदाय नमः
सूर्यनारायणावताराय नमः
सूर्यांतेवासिने नमः
सूर्यलोकप्राप्तजयाय नमः
सूर्यमंडलस्थाय नमः
सूर्यसंतोषकार्यकृते नमः
सूर्योपासनतत्पराय नमः
सूर्यस्वरूपाय नमः
सूतकरथित्रे नमः
सूर्यस्वरूपस्तुतिकर्त्रे नमः
सूर्यवरलब्धाय नमः
सूर्यप्रसादलब्धसारस्वताय नमः
सूर्यानुग्रहसंप्राप्तसर्ववेदान्तपारगाय नमः
सूर्यभेदज्ञाय नमः
सूर्याराधनतत्पराय नमः
सूर्यतेजोविजृंभिताय नमः
सूर्यप्राप्तब्रह्मविद्यापरिपूर्णमनोरथाय नमः
सूर्यलोकस्थवेदैकप्रकाशनपटुव्रताय नमः
सोमवारव्रतज्ञाय नमः
स्मृतिकर्त्रे नमः
स्मृतिप्रसिद्धसत्कीर्तये नमः
सोमकासुरापहृतवेदप्रचुरकृते नमः
सौम्यमहर्षिशिष्याग्रगण्याय नमः
सौम्यमहर्षेप्राग्जन्मपरिज्ञात्रे नमः
सौरमंत्रप्रभावज्ञाय नमः
सौरसंहितोक्तवैभवाय नमः
हरिहरात्मकाय नमः
हयवदनोपासकाय नमः
हरिहरप्रभवे नमः
हरिहरहिरण्यगर्भप्रसादान्विताय नमः
हयशिरोरूपप्रभावज्ञाय नमः
हिरण्यकेशिवेददात्रे नमः
हिरण्मयेनेत्यादिमंत्रोपासकाय नमः
हेमयुतधेनुसहस्रप्राणदात्रे नमः
होताश्वलजेत्रे नमः
क्षमादिगुणोपेताय नमः
क्षयवृद्धिभाववर्जिताय नमः
क्षेत्रोपेतद्विजगुरवे नमः
क्षत्राज्ञाकारिणे नमः
क्षेत्रक्षेत्रज्ञविवेककृते नमः
क्षत्रियमूर्धन्यवंदिताय नमः
क्षेत्रकाशीपुराधिष्ठिताय नमः
क्षेत्रजनस्थानेजनकयज्ञसंपादकाय नमः
क्षत्रियवर्णोपयोगिराज्यतंत्रप्रणेत्रे नमः
क्षत्रियसहस्रशिरोलुठितचरणपंकजाय नमः

१०००

श्रीमद्योगीश्वरयाज्ञवल्क्याय नमः

इति श्रीमद्योगीश्वरयाज्ञवल्क्यसहस्रनामावलिः संपूर्णा

परिशिष्ट १०

# शुक्लयजुःशाखीय परिचयार्ह ग्रंथ

## १ संहिता

| | | |
|---|---|---|
| शुक्लयजुःशाखीय | माध्यंदिन संहिता | प्रवर्तक श्रीसूर्यनारायण |
| ,, | कण्व संहिता | ,, |
| ,, | जाबाल संहिता | ,, |
| ,, | बौधेय संहिता | ,, |
| ,, | शापेय संहिता | ,, |
| ,, | तापायनीय संहिता | ,, |
| ,, | कपोल संहिता | ,, |
| ,, | पौंड्रवत्स संहिता | ,, |
| ,, | आवटिक संहिता | ,, |
| ,, | परमावटिक संहिता | ,, |
| ,, | पाराशर संहिता | ,, |
| ,, | वैनधेय संहिता | ,, |
| ,, | गालव संहिता | ,, |
| ,, | कात्यायन संहिता | ,, |
| ,, | बैजवाप संहिता | ,, |

## २ संहिताभाष्यें

| | | | |
|---|---|---|---|
| शुक्लयजुःशाखीय | माध्यंदिन संहिता | मंत्रार्थप्रकाश | आनंदपुरस्थ उवट |
| ,, | ,, | वेददीप | काशीस्थ महीधर |
| ,, | ,, | रावणीय भाष्य | रावणभट्ट |
| वेदविलास | | | काश्मीरदेशीय गौरधर |
| वेदार्थदीपिका | | | वडनगरवासी अनंताचार्य |
| मंत्रार्थदीपिका | | | शत्रुघ्न |
| रत्नमाला | | | भवदेव मिश्र |
| | | | शौनक |
| | | | हरिस्वामी |
| बालबोधिनी | | | म. म. पाठक शास्त्री |

| | |
|---|---|
| कण्वसंहिताभाष्य | सायणाचार्य किंवा माधवाचार्य |
| कण्ववेदमंत्रभाष्य | आनंदबोधभट्ट |
| भावार्थदीपिका | अनंताचार्य |
| ब्राह्मणसर्वस्व | हलायुध |

## ३ रुद्रभाष्यें

| | |
|---|---|
| शुक्लयजुःशाखीय माध्यंदिन रुद्रभाष्य | मयूरेश |
| ,, ,, ,, | राजहंस सरस्वती |
| ,, ,, ,, | भवदेवमिश्र |
| ,, ,, ,, | भवानीशंकर |
| ,, काण्व रुद्रभाष्य | वेणीरायसम्राज |
| कूष्मांडप्रदीपिका | हररात |

## ४ अष्ट विकृति

| | |
|---|---|
| पदपाठ | |
| क्रमपाठ | |
| जटा | महर्षि व्याडि |
| माला द्विविधा | ,, |
| शिखा | ,, |
| रेखा | ,, |
| ध्वज | ,, |
| दंड | ,, |
| रथ त्रिविध | ,, |
| घन द्विविध | ,, |
| पंचसंधि | ,, |

## ५ शतपथब्राह्मण

| | | | |
|---|---|---|---|
| शु. य. | माध्यंदिन | शतपथ ब्राह्मण | योगीश्वर याज्ञवल्क्य |
| ,, | कण्व | ,, | ,, |
| ,, | जाबाल | ,, | ,, |
| ,, | बौधेय | ,, | ,, |
| ,, | शापेय | ,, | ,, |
| ,, | तापनीय | ,, | ,, |
| ,, | कपोल | ,, | ,, |

| | | |
|---|---|---|
| याज्ञवल्क्य | उपनिषद् | |
| शाट्यायनीय | ,, | |
| मुक्तिका | ,, | |
| कैवल्य | ,, | |
| कैवल्योपनिषद्दीपिका | | शंकरानंद |

## श्रौतसूत्र व त्यावरील ग्रंथ

| | | |
|---|---|---|
| कात्यायन श्रौतसूत्र | | भगवान् कात्यायन |
| कात्यायनश्रौतसूत्रभाष्य | | भर्तृयज्ञ |
| | | यशोगोपी |
| ,, | | पितृभूति |
| ,, | | संप्रदाय |
| ,, | | उपाध्यायपाद |
| ,, | | कर्कोपाध्याय |
| ,, | | हरिस्वामी |
| ,, | | गर्ग |
| ,, | | शंकर |
| ,, | | अनंतदेव |
| ,, | | देवयाज्ञिक |
| ,, | | द्विवेदी महादेव |
| ,, | | काशी दीक्षित |
| ,, | | |
| ,, | सरलावृत्ति | विद्याधरामिश्र |
| कात्यायन श्रौतसूत्र | पद्धति | संप्रदाय |
| | | देवयाज्ञिक |
| ,, | ,, | |
| ,, | वासुदेवी | दीक्षित वासुदेव |
| ,, | पद्धति | पद्मनाभ |
| | | वैद्यनाथमिश्र |
| ,, | ,, | |
| ,, | याज्ञिकवल्लभा | महादेव दीक्षित |
| ,, | दीपिका | रामवाजपेयी |
| ,, | पदार्थादर्श | गोवर्धन दीक्षित |
| ,, | कारिकापद्धति | रेणु दीक्षित |
| ,, | पदार्थदीपिका | गंगाधर पाठक |
| ,, | प्रयोगसार | देवभद्र पाठक |

